श्री

# सिंदूरप्रकर

मूल, टीका अने भाषांतर सहित

आ ग्रंथ

समस्त चतुर्विध श्रीसंघने भणवा योग्य जाणी

तेने

यथामति शुद्ध करी

छपावी प्रसिद्ध करनार

(शा रायचंद जयचंद स्थापन करेली)

## श्री जैनविद्याशाला

दोशीवाडानी पोल—अमदावाद.


(आवृत्ति २ जी)

[illegible]

संवत १९५६ सने १९००

किंमत [illegible] आना.

# प्रस्तावना



भव्य जनो उपर महा उपकार करनारा श्रीसोमप्रभाचार्ये जो के, अनेक ग्रथो रचेला छे, तो पण ते महा पुरुषे आ रत्नसमान श्रीसिंदूरप्रकर नामनो ग्रथ रची भव्य प्राणिओने जे अनहद आनद उपजाव्यो छे, ते खरेखर प्रशंसा करवा लायक छे कारण के, काव्यनी चमत्कृति अने तेनी अदर रहेला गूढ अभिप्राय माणसोने एवो बोध करे छे के, ते एक वखत साभलवाथी जन्म पर्यत भूली जवाता नथी ए आचार्ये पोते जे वखते आ ग्रथ रच्यो, ते वखते सस्कृत विद्यानो परिचय वधारे होवाथी ते वखतना विद्वानोने पोतानी काव्य रचना देखाडवाने अने सर्व माणसोने धर्म सबधी उपदेश करवाने तेमणे आ ग्रथ रचेलो छे पडित श्रीहर्षकीर्तिसूरिए आ ग्रथनी सस्कृत भाषामा सरल टीका करी छे, परतु हालना वखतमा काल माहात्म्यने लीधे सस्कृत विद्यानो परिचय बहुज ओछो थई जवाथी तेवा सस्कृत ग्रथोनी अदर रहेलो रहस्य सर्व माणसो जाणी शकता नथी, तेथी अमे आ ग्रथ मूल काव्य, टीका अने तेनी साथे मूल श्लोकनु सरल गुजराती भाषातर करीने छपाव्यो छे आ ग्रथ प्रथम अमारी तरफथी सवत १९२३ नी सालमा छपायो हतो, ते खपी जवाथी हाल तेनी आ बीजी आवृत्ति छपावी छे प्रथमावृत्तिमा जे जे स्थले भूलो थएली हती, ते आ वखते बनती काळजीथी सुधारी लेवामा आवी छे

अमे आशा राखीए छीए के, सज्जनो आ ग्रंथने आदिथी अंत सुधी वांची महान् आचार्यनो उपकार भूली जशे नही.

आ ग्रंथनो वहोलो फेलावो थाय, एवा हेतुथी अमे तेनी किम्मत् वहुज ओछी एटले मात्र छ आनाज राखी छे. प्रथमावृत्तिमां गुजराती भाषांतर नहि छतां तेनी किम्मत् आठ आना राखी हती, अने आ वखते गुजराती भाषांतरनो वधारो करवा छतां पण छ आना किम्मत् राखी छे, तेनुं कारण एज के, तेनो वहोलो फेलावो थाय.

छेवट आ ग्रंथनी अंदर कोई स्थले जिनाज्ञा विरुद्ध अशुद्ध लखाण आवी गयुं होय, अथवा कोई स्थले दृष्टिदोषथी या मतिदोषथी जे कांई भूल थई होय, तेने माटे अमे चतुर्विध श्रीसंघनी साखे मिथ्यादुष्कृत दईए छीए.

जेवो आ सिंदूरप्रकर ग्रंथ छे, तेवोज वल के तेथी पण वधारे सरस एवो (१८८) काव्यवालो कर्पूरप्रकर ग्रंथ पण आज रीते मूल काव्य टीका अने भाषांतर सहित छपाय छे.

किं बहुना!

लि. जैनविद्याशाला.

सोमप्रभाचार्य विरचित,

श्री

# सिंदूरप्रकर

## मूल, टीका अने भाषांतर सहित

---

प्रथम ग्रंथना आरंभमा ग्रंथकर्त्ता पोताना इष्टदेवना चरणस्मरणरूप मंगलाचरण पूर्वक आ ग्रंथ सांभळनारने आशीर्वाद कहे छे.

( शार्दूलविक्रीडितवृत्तम् )

सिंदूरप्रकरस्तपःकरिशिरःक्रोडे कषायाटवी,
दावार्चिर्निचयः प्रबोधदिवसप्रारंभसूर्योदयः ॥
मुक्तिस्त्रीकुचकुंभकुंकुमरसः श्रेयस्तरोः पल्लव-
प्रोल्लासः क्रमयोर्नखद्युतिभरः पार्श्वप्रभोः पातु व ॥ १ ॥

श्रीमत्पार्श्वजिनं नत्वा, श्रोतॄणां सुखकारकम् ॥ सद्य सत्स्मृतिमात्रेण, प्रत्यूहव्यूहवारकम् ॥ १ ॥ श्रीचंद्रकीर्त्तिसूरीणां, सद्गुरूणां प्रसादत ॥ सिंदूरप्रकरव्याख्या, क्रियते हर्षकीर्त्तिना ॥ २ ॥ युग्म ॥ ग्रंथकर्त्ता आदौ इष्टदेवताचरणस्मरणरूप मंगलाचरणपूर्वक श्रोतॄन् प्रति आशीर्वादवृत्तमाह ॥ व्याख्या ॥ पार्श्वप्रभो श्रीपार्श्वनाथस्य क्रमयोश्चरणयोर्नखद्युतिभर रक्तकांतिसमूहो वो युष्मान् पातु अवतु रक्षतु ॥ कथंभूतो नखद्युतिभर । तप करिशिर क्रोडे सिंदूरप्रकर तप एव करी हस्ती तस्य शिर क्रोडो मस्तकमध्यभाग कुंभस्थल तत्र सिंदूरप्रकर सिंदूरपु-

जसदृशः। नखद्युतिभरस्य रक्तत्वात् सिंदूरप्रकरोपमा। पुनः कथंभूतो नखद्युतिभरः। कषायाटवीदावार्चिर्निचयः कषायाः क्रोध, मान, माया, लोभास्त एव अटवी अरण्यं वनं तस्याः दावार्चिर्निचयः दावाग्निज्वालासमूहतुल्यः। पुनः कथंभूतो नखद्युतिभरः। प्रबोधदिवसप्रारंभसूर्योदयः प्रबोधो ज्ञानं स एव दिवसो दिनं तस्य प्रारंभे उदये सूर्योदयसमानः। पुनः कथंभूतो नखद्युतिभरः। मुक्तिस्त्रीकुचकुंभकुंकुमरसः मुक्तिरेव स्त्री तस्याः कुचावेव कुंभौ तत्र कुंकुमरसः काश्मीररजोद्रवलेपतुल्यः॥ मुक्तिस्त्रीवदनैककुंकुमरस इति वा पाठः॥ पुनः कथंभूतो नखद्युतिभरः। श्रेयस्तरोः पल्लवप्रोल्लासः श्रेयः कल्याणमेव तरुर्वृक्षस्तस्य पल्लवानां नूतनपत्राणां प्रोल्लासः उद्गमः। ईदृशः पार्श्वप्रभोः क्रमयोश्चरणयोर्नखद्युतिभरो वो युष्मान् पातु रक्षतु। नखद्युतिभरस्य रक्तवर्णत्वात् रक्ता एवोपमा। भो भव्यप्राणिन्! एवं ज्ञात्वा मनसि विवेकमानीय श्रीपार्श्वनाथस्य चरणकमलावेव सेव्यौ। सेव्यमानानां यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरंतु॥ १॥

**तपरूप हस्तीना कुंभस्थलने विषे सिंदूरना[1] समूह समान, कषाय[2] रूपी अटवीने बाली नांखवाने अग्निना समूह समान, ज्ञान रूपी दिवसना उदयने विषे सूर्यना उदय समान, मुक्ति रूप स्त्रीना कुचकुंभ (स्तन रूप घडा)ने विषे अथवा 'मुक्तिस्त्रीवदनैककुंकुमरसः' एवो पाठ छे तेथी मुक्ति रूप स्त्रीना मुखकमलने विषे कुंकुमना लेप समान, अने कल्याण रूपी वृक्षना नवपल्लव (नवा अंकुरा)नुं उत्पत्ति स्थान; एवो श्रीपार्श्वनाथ प्रभुना चरणना नखनो कांतिसमूह तमारूं रक्षण करो. (१)**

---

१ नखनो कातिसमूह रातो होवाथी तेने सिंदूरना समूहनी उपमा आपेली छे.
२ क्रोध, मान, माया अने लोभ.

हवे कवि, सज्जन पुरुषोने विनती करे छे

सतः सतु मम प्रसन्नमनसो वाचा विचारोद्यताः,
सूतेऽम्भः कमलानि तत्परिमल वाता वितन्वति यत् ॥
किंवाभ्यर्थनयानया यदि गुणोऽस्त्यासां ततस्ते स्वयं,
कर्त्तारः प्रथनं न चेदथ यशःप्रत्यर्थिना तेन किम् ॥ २ ॥

अथ कवि सज्जनपुरुषान्प्रति स्वविज्ञप्तिमाह ॥ व्याख्या ॥ सत इति ॥ सत सज्जना मम प्रसन्नमनस सतु ममोपरि प्रसन्नचित्ता भवतु । किं विशिष्टा सत । वाचा कविवाणीना विचारे सदसद्विचारे उद्यता सावधाना समीचीनासमीचीनविचारज्ञा ॥ यत् यस्मात् कारणात् अभ पानीय कमलानि सूते उत्पादयति, पर तत्परिमल तेषा कमलाना परिमलमामोद वाता वायवो वितन्वति विस्तारयति। तद्वदेन ग्रथमह रचयिष्यामि । पर ग्रथस्य विस्तार सज्जना करिष्यति ॥ यत ॥ पद्मानि बोधयत्यर्क , काव्यानि कुरुते कवि ॥ तत्सौरभ नभस्वत , सतस्तन्वति तद्गुणान् ॥ १ ॥ अथवा अनया ममाभ्यर्थनया सतामग्रे प्रार्थनया किं । अपि तु न किमपि । कुत ॥ यद्यासा मम वाणीना मध्ये गुणोऽस्ति तदा ते सत स्वयमेव प्रथन विस्तार कर्त्तार भविष्यति ॥ यद्यस्मिन् शास्त्रे कश्चिद्गुणो भविष्यति तदा सत स्वयमेव ममाभ्यर्थना विनैव विस्तार करिष्यति ॥ अथ चेद्यदि आसा मम वाणीना मध्ये गुणो न १ तदा तेन प्रथनेन विस्तरेण कि। अपि तु न किमपि ॥ कथभूतेन ,न प्रथनेन विस्तरेण । यश - प्रत्यर्थिना यशस प्रत्यर्थि शत्रुभूत यत्तत् यश प्रत्यर्थि तेन यश प्रत्यर्थिना यशसो विनाशनेन । निर्गुणस्य विस्तारणेन अयश एव भवतीत्यर्थ ॥ २ ॥

म्हारी वाणीना सारा नरसा विचारने विषे सावधान एवा सत पुरुषो म्हारा उपर प्रसन्न चित्तवाला थाओ, कारण के, जल तो

कमलोने उत्पन्न करे छे, परंतु तेमनी सुगंधने विस्तार करनार तो वायुज छे. अथवा तो म्हारे (ते सज्जनोने) आवी प्रार्थना करवानी शी जरूर छे? जो ए(म्हारी वाणी)ने विषे गुण हशे, तो ते (सज्जनो) पोतेज विस्तारने करशे; नहि तो यशना वैरी[1] समान एवा ए विस्तारे करीने शुं? अर्थात् कांई नहीं. (२)

हवे वीतरागना आगमने अनुसारे भव्य जीवोना
हितने माटे धर्मोपदेश कहे छे.

(उपजातिवृत्तम्.)

त्रिवर्गसंसाधनमंतरेण, पशोरिवायुर्विफलं नरस्य ॥
तत्रापि धर्म्मं प्रवरं वदंति, न तं विना यद्भवतोऽर्थकामौ ॥ ३ ॥

अथ विहितसकलसुरासुरसेवस्य देवाधिदेवस्य श्रीवीतरागस्यागमानुसारेण भव्यानां हितहेतवे धर्मोपदेशमाह ॥ त्रिवर्ग इति ॥ भो भव्य त्रिवर्गसंसाधनमंतरेण नरस्य आयुः पशोरिव विफलं ज्ञेयं । धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाश्चतुर्वर्गास्तेषां मध्ये सांप्रतं अस्मिन् भरतक्षेत्रे मोक्षः साधयितुं न शक्यः ॥ अतः कारणात् शेषस्त्रिवर्गः धर्म्मार्थकामरूपः । तस्य त्रिवर्गस्य संसाधनं उपार्जनं अंतरेण विना नरस्य मनुष्यस्य आयुर्ज्जीवितं पशोरिव विफलं निष्फलं वृथेत्यर्थः ॥ येन नरेण धर्मार्थकामानां संसाधनं उपार्ज्जनं न क्रियते तस्य जीवितं पशोरिव छागादेरिव वृथा निष्फलं ॥ यतः ॥ धर्मार्थकाममोक्षाणां, यस्यैकोपि न विद्यते । अजागलस्तनस्येव, निष्फलं तस्य जीवितम् ॥ १ ॥ इति ॥ ते त्रयोपि किं सदृशाः वा किंचिदंतरं इत्याह ॥ तत्रापि त्रिवर्गे धर्म प्रवरं वदंति श्रेष्ठं कथयंति । कुतः यत् यस्मात् कारणात् धर्म्मं विना अर्थकामौ न भवतः

---

१ यशनो नाश करनार.

येन पूर्वजन्मनि धर्म्मं कृतो भवति तस्यैवात्रार्थकामौ भवत नान्यस्य ॥ यदुक्त ॥ किं जपिएण वहुणा, जं जं दीसई समत्थजियलोए ॥ इंदियम णाभिरामं, तं तं धम्म फलं सव्वं ॥ २ ॥ अत कारणात् त्रिवर्गे धर्म्म एव श्रेष्ठ ॥ भो भव्यप्राणिन्! एवं ज्ञात्वा मनसि विवेकमानीय श्रीसर्वज्ञप्रणीतो धर्म्म एवाचरणीय धर्मं माचरता सता यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरतु ॥ ३ ॥

धर्म, अर्थ अने कामरूप त्रण वर्गना साधन विना मनुष्यनु आयुष्य पशुना आयुष्यनी पेठे निष्फल छे ते त्रणने विषे पण धर्मने श्रेष्ठ कहे छे, कारण के, ते (धर्म) विना अर्थ अने काम बनी शकता नथी (३)

हवे नरभवनु दुर्लभपणु कहे छे

(इन्द्रवज्रावृत्तम्)

**यः प्राप्य दुःप्राप्यमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः ॥**
**क्लेशप्रबंधेन स लब्धमब्धौ, चिंतामणिं पातयति प्रमादात् ॥४॥**

अथ नरभवस्य दुर्लभत्वमाह ॥ य प्राप्य इति ॥ यो मूढो मूर्ख इव दुष्प्राप्य नरत्व प्राप्य यत्नेन उद्यमेन धर्म्मं न करोति स क्लेशप्रबंधेन लब्ध चिंतामणिरत्न प्रमादात् अब्धौ समुद्रे पातयति ॥ यो मूर्ख पुमान् दु खेन महता कष्टेन प्राप्य ॥ यत ॥ चुल्लग १ पासग २ धन्ने ३, जूए ४ रयणे ५ सुमिण ६ चक्के य ७ ॥ कुम्म ८ जुगे ९ परमाणू १०, दस दिट्ठंता मणुअजम्मे ॥ १ ॥ इत्यादिदशभिर्दृष्टांतैर्दुर्लभ इद नरत्व मनुष्यजन्म प्राप्य लब्ध्वा यत्नेन सावधानतया श्रीवीतरागप्रणीत धर्म्मं न करोति उपेक्षते स क्लेशप्रबंधेन महता कष्टप्रकारेणातिप्रयासेन लब्ध प्रत्यक्षप्राप्त चिंतामणिरत्न प्रमादात् अब्धौ समुद्रे पातयति ॥ अत्र ब्राह्मणरत्नद्वीपदे-

व्यादत्तचिंतामणिरत्नसमुद्रपातनसंबंधो वाच्यः । भो भव्यप्राणिन्! एवं ज्ञात्वा मनसि विवेकमानीय यत्नेन धर्म्म एव कार्यः धर्म्मं च कुर्वतां सतां यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरंतु ॥

दुःखे प्राप्त थई शके एवुं मनुष्यपणुं पामीने जे मूढ पुरुष उद्यमथी धर्म करतो नथी, ते घणी महेनते प्राप्त करेला चिंतामणि-(रत्न)ने आलसथी समुद्रने विषे नांखी दे छे. (४)

**हवे मनुष्यभवनो सर्वोत्कृष्ट जय कहे छे.**

(मंदाक्रांतावृत्तम्.)

**स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते,**
**पीयूषेण प्रवरकरिणं वाहयत्यैंधभारम् ॥**
**चिंतारत्नं विकिरति कराद्वायसोड्डायनार्थं,**
**यो दुष्प्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः ॥ ५ ॥**

अथ मनुष्यभवस्य सर्वोत्कृष्टत्वमाह ॥ स्वर्णस्थाले इति ॥ यः पुमान् प्रमत्तः सन् प्रमादस्य वशं पतितः सन् मद्य विषय कषाय निद्रा विकथा-रूप प्रमादवशं गतः सन् दुःप्रापं चतुरशीतिलक्षजीवयोनिषु भ्रमता जीवेन दुःखेन महता कष्टेन प्राप्यं यत् मर्त्यजन्म मनुष्यभवं तत् मुधा वृथा श्रीजिनधर्म्मं विना निष्फलं गमयति । स पुमान् स्वर्णस्थाले रजो धूलिं कचवरादि क्षिपति । स्वर्णस्थालतुल्यं मर्त्यजन्म रजःसदृशाः प्रमादाः ॥ पुनः सः पुमान् पीयूषेण अमृतेन कृत्वा पादशौचं चरणप्रक्षालनं विधत्ते करोति । पीयूषस्य बिंदुमात्रपानेनाजरामरत्वं स्यात् तत् पादप्रक्षालनार्थं मुधा वृथा गमयतीत्युक्तं ॥ पुनः सः पुमान् प्रवरकरिणं प्रधानहस्तिनं ऐंधभारं इंधनकाष्ठसमूहं वाहयति ॥ यस्मिन् गजे द्वारि बद्धेऽपि सति शोभा भवति तेन इंधनानयनमयुक्तं ॥ पुनः सः पुमान् वायसोड्डाय-

नार्थं काकस्य उड्डायननिमित्तं चिंतामणिरत्नं करात् हस्तात् विकिरति विक्षिपति ॥ यथा मनोवांछितार्थदायकस्य चिंतामणिरत्नस्य काक उड्डायनार्थं विक्षेपणमयुक्तं तथा धर्मसाधकेन मर्त्यजन्मना प्रमादसेवनमयुक्तं । भो भव्यप्राणिन् ! एवं ज्ञात्वा मनसि विवेकमानीय प्रमादं त्यक्त्वा धर्मं कृत्वा मनुष्यजन्म सफलं कार्यं ॥ धर्ममाचरता सता यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरतु ॥ ५ ॥

जे माणस, दुःखे पामवा योग्य एवा आ मनुष्य भवने प्रमादने[1] वश थई वृथा गुमावे छे, ते माणस सोनाना थाल्मां विषे रज (धूळ) नाखे छे, अमृतथी पग धुए छे, श्रेष्ठ हस्ती पासे लाकडानो भार उपडावे छे, अने कागडाने उडाडी मूकवा माटे हाथमांथी चिंतामणि रत्नने फेंकी दे छे (५)

हवे जे संसारना विषय माटे धर्मनो त्याग करे छे,
तेओने मूर्ख जणाववाने कहे छे

(शार्दूलविक्रीडितवृत्तम् )

ते धत्तूरतरुं वपति भवने प्रोन्मूल्य कल्पद्रुमं,
चिंतारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः ॥
विक्रीय द्विरदं गिरींद्रसदृशं क्रीणाति ते रासभं,
ये लब्धं परिहृत्य धर्ममधमा धावंति भोगाशया ॥ ६ ॥

ये तु असाराणां विषयाणां कृते धर्मं त्यजन्ति ते मूढा इत्येतदाह ॥ ते धत्तूर इति ॥ ये अधमा मूर्खाः पुरुषा लब्धं प्राप्तं धर्मं परिहृत्य त्यक्त्वा भोगाशया विषयवांछया धावंति विषयार्थं प्रवर्त्तंते ते नरा भवने स्वगृहे प्रोद्भूतं उद्गतं कल्पवृक्षं प्रोन्मूल्य उत्पाट्य धत्तूरतरुं वपंति आरोपयंति । पुनस्ते जडा मूर्खाः चिंतामणिरत्नं अपास्य त्यक्त्वा दूरीकृत्य काचशकलं

१ मद, विषय, कषाय, निद्रा अने विकथा

काचखंडं स्वीकुर्व्वंते गृह्णंति । पुनस्ते जडाः गिरींद्रसदृशं पर्वतप्रायकायं उच्चं द्विरदं हस्तिनं विक्रीय रासभं गर्द्दभं क्रीणंति मूल्येन गृह्णंति ॥ अत्र कल्पवृक्षसदृशो धर्म्मः । धत्तूरसदृशा भोगाः एवं सर्वत्रोपनयः ॥ भो भव्यप्राणिन्! एवं ज्ञात्वा मनसि विवेकमानीय कल्पवृक्षचिंतामणिसदृशः श्रीजिनधर्म्म एवाराध्यः आराधयतां यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरंतु ॥ ६ ॥

जे मूर्ख पुरुषो, प्राप्त थएला धर्मनो त्याग करीने भोगनी वांछाने अर्थे दोडे छे, अर्थात् विषयमां प्रवर्त्ते छे, ते मूर्ख पुरुषो पोताना घरने विषे उत्पन्न थएला कल्पवृक्षने उखेडी नांखीने धंतूराना वृक्षने वावे छे; ते जडबुद्धिवाला पुरुषो चिंतामणि रत्नने फेंकी दईने काचनो कडको ग्रहण करे छे, अने पर्वत समान हस्तीने वेची दईने गधेडाने खरीद करे छे. ( ६ )

हवे मनुष्यजन्मनुं तथा धर्मसामग्रीनुं दुर्लभपणुं कहे छे.

(शिखरिणीवृत्तम्.)

अपारे संसारे कथमपि समासाद्य नृभवं,<br>
न धर्मं यः कुर्याद्विषयसुखतृष्णातरलितः ॥<br>
ब्रुडन् पारावारे प्रवरमपहाय प्रवहणं,<br>
स मुख्यो मूर्खाणामुपलमुपलब्धुं प्रयतते ॥ ७ ॥

अथ नरभवस्य धर्म्मसामग्र्याश्च दुर्लभत्वमाह ॥ अपारे संसारे इति ॥ यः पुमान् विषयसुखतृष्णातरलितः सन् विषयाणां कामभोगानां शब्दरूपरसस्पर्शगंधानां सुखस्य तृष्णा वांछा तया तरलितो वाहितो व्याकुलीकृतः सन् अपारे अनंते संसारे कथमपि महता कष्टेन नृभवं मनुष्यजन्म समासाद्य प्राप्य धर्म्मं न कुर्यात् न करोति । सः पुमान् पारावारे समुद्रे ब्रुडन् निमज्जन् प्रवरं उत्तमं प्रवहणं पोतं अपहाय त्यक्त्वा तरणार्थं

उपल पाषाण उपलब्धु ग्रहीतु प्रयतते यत्न करोति उद्यम करोति ॥,
कथभूत स । मूर्खाणा मुख्य मूर्खेषु वृद्धमूर्ख । अत्र ससार समुद्र ।
धर्म्म प्रवहण। विषया पाषाणसदृशा इत्युपनय ॥ भो भव्यप्राणिन्[1] एव
ज्ञात्वा मनसि विवेकमानीय ससारसमुद्रतारक श्रीधर्म्म एव आराध्य ।
आराधयता च सता यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमागलि
क्यमाला विस्तरतु ॥ ७ ॥

**जे माणस आ अनत ससारने विषे महा कष्टे मनुष्य भव पामीने विषयसुखनी तृष्णाथी व्याकूल थई, धर्म करतो नथी, ते मूर्खशिरोमणि समुद्रने विषे बूडतो छतो उत्तम वहाणने तजी दई पत्थरने ग्रहण करवानो प्रयत्न करे छे ( ७ )**

**आ ग्रथमा जे उपदेश द्वारो कहेवाना छे, ते कहे छे**

(शार्दूलविक्रीडितवृत्तम् )

**भक्ति तीर्थकरे गुरौ जिनमते सघे च हिंसानृत,**
**स्तेयाब्रह्मपरिग्रहाद्युपरम क्रोधाद्यरीणा जयम् ॥**
**सौजन्य गुणिसगमिंद्रियदम दानं तपोभावना,**
**वैराग्यं च कुरुष्व निर्वृतिपदे यद्यस्ति गतु मनः ॥८॥**

अथास्मिन् शास्त्रे एतान्युपदेशद्वाराणि कथयिष्यते ॥ इत्युपदेशद्वारेण द्वारवृत्तमाह ॥ भक्तिमिति ॥ भो भव्यप्राणिन् ! यदि तव निर्वृतिपदे मोक्षे गतु मनोऽस्ति तदा त्व तीर्थकरे श्रीवीतरागे भक्तिं भावपूजा गुणोत्कीर्त्तनरूपा कुरुष्व ॥ १ ॥ पुनर्गुरौ धर्म्मोपदेशके भक्तिं कुरुष्व ॥२॥ पुन जिनमते जिनशासने भक्ति कुरुष्व ॥ ३ ॥ पुन चतुर्विधसघे भक्ति कुरुष्व ॥ ४ ॥ हिंसानृतस्तेयाब्रह्मपरिग्रहाद्युपरम कुरुष्व ॥ ५ ॥

[1] शब्द, रूप, रस, गध अने स्पर्श

(हिंसा जीववधः प्राणातिपातः ॥ १ ॥ अनृतं असत्यं मृषावादः ॥ २ ॥ स्तेयं चौर्य अदत्तादानं अदत्तपरस्ववस्तुग्रहणं ॥ ३ ॥ अब्रह्म मैथुनं स्त्रीसेवा ॥ ४ ॥ परिग्रहो धनधान्यादि नवविधः ॥ ५ ॥ एभ्य उपरमं निवर्त्तनं कुरुष्व ॥ ९ ॥) अत्र व्युपरमोऽपि पाठो भवति। पुनः क्रोधाद्यरीणां क्रोध ॥ १० ॥ मान ॥ ११ ॥ माया ॥ १२ ॥ लोभ ॥ १३ ॥ रूपारीणां जयं कुरुष्व । पुनः सौजन्यं सुजनभावं सर्वजीवेषु मैत्रीभावं कुरुष्व ॥ १४ ॥ पुनः गुणिसंगं गुणीनां गुणवतां मनुष्याणां संगं संगतिं कुरुष्व ॥ १५ ॥ पुनः इंद्रियदमं पंचेंद्रियाणां दमनं कुरुष्व ॥ १६ ॥ पुनर्दानं सुपात्रादि पंचप्रकारं कुरुष्व ॥ १७ ॥ पुनस्तपोऽनशनमूनोदर्यादि बाह्यं आभ्यंतरं च द्वादशविधं कुरुष्व ॥ १८ ॥ पुनर्भावनां शुभचित्तभावं कुरुष्व ॥ १९ ॥ पुनर्वैराग्यं संसारात् भोगादिभ्यश्च विरक्तभावं कुरुष्व ॥ २० ॥ एतानि मोक्षपददायकानि ज्ञात्वा सम्यक् प्रकारेणाराधनीयानि ॥ आराधयतां सतां यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरंतु ॥ ८ ॥

**हे भव्य जनो! जो तमारी मोक्षपद पामवानी इच्छा होय तो १ श्रीतीर्थंकर महाराजा, २ गुरु, ३ जिनशासन अने ४ संघ—ए चारेनी तमे भक्ति करो; ५ हिंसा, ६ असत्य, ७ चोरी, ८ मैथुन अने ९ परिग्रह—ए पांचथी निवर्त्तो; वली १० क्रोध, ११ मान, १२ माया अने १३ लोभ—ए चार शत्रुओने जीतो; १४ (सर्व जीवने विषे) मैत्रीभाव (मित्रता) करो, तथा १५ गुणवान जनोनी संगत, १६ पांचे इंद्रियोनुं दमवुं, १७ (पात्रने विषे) दान, १८ तपश्चर्या, १९ शुभ भाव अने २० संसार थकी विरक्तभाव (वैराग्य)—एटलांवानां करो. (८)**

**हवे प्रथम चार काव्यथी तीर्थंकर भक्तिद्वार कहे छे.**

पापं लुंपति दुर्गतिं दलयति व्यापादयत्यापदं,
पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरोगताम् ॥
सौभाग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः,
स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चाऽर्हतां निर्मिता ॥९॥

अथ यथोद्देशस्तथैव निर्देश इति वचनात् अनुक्रमेण द्वाराणि निवृणोति ॥ तत्र प्रथमं चतुर्भिर्वृत्तैः श्रीतीर्थंकरभक्तिद्वारमाह ॥ पापं लुंपतीति ॥ भो भव्याः ! अर्हतां जिनानां भावपूजा गुणोत्कीर्तनवंदना पर्युपास्त्यादि निर्मिता कृता सती पापं लुंपति दूरीकरोति । पुनर्दुर्गतिं नरकादिदुष्टगतिं दलयति खंडयति निवारयति । पुनः आपदः कष्टं व्यापादयति विनाशयति । पुनः पुण्यं धर्मं संचिनुते वृद्धिं प्रापयति । पुनः श्रियं लक्ष्मीं वितनुते विस्तारयति । पुनर्नीरोगतां शरीरे आरोग्यं पुष्णाति पोषयति । पुनः सौभाग्यं सर्वजनेषु श्लाघनीयतां विदधाति करोति । पुनः प्रीतिं पल्लवयति उत्पादयति । पुनर्यशः प्रसूते यशोविस्तारयति । पुनः स्वर्गं त्रिदिवं देवपदं यच्छति ददाति । पुनर्निर्वृतिं रचयति ददाति ॥ भो भव्यप्राणिन् ! एवं ज्ञात्वा मनसि विवेकमानीय सम्यक्त्वनिर्मलविधायिनी इहलोके परलोके च सर्वसौख्यदायिनी वंदनादिगुणस्तुतिः श्रीजिनभावपूजा कार्या । कुर्वता सता यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरतु ॥ ९ ॥

अरिहंत भगवंतनी करेली भावपूजा पापने दूर करे छे, दुर्गतिनुं निवारण करे छे, आपत्तिनो (दुःखनो) विनाश करे छे, पुण्यने वधारे छे, लक्ष्मीनो विस्तार करे छे, आरोग्यतानुं पोषण करे छे (शरीरे सुखी राखे छे), सर्व जनोने विषे प्रशंसा पमाडे छे, प्रीति उत्पन्न करे छे, अने यशने वधारे छे, तेमज देवतानी पदवी आपे छे अने परंपराए मोक्षपद पण आपे छे (९)

**हवे जिनेश्वरनी भावपूजानुं फल कहे छे.**

**स्वर्गस्तस्य गृहांगणं सहचरी साम्राज्यलक्ष्मीः शुभा,**
**सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि ॥**
**संसारः सुतरः शिवं करतलक्रोडे लुठत्यंजसा,**
**यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ॥१०॥**

पुनः श्रीजिनस्य भावपूजायाः फलमाह ॥ स्वर्गस्तस्येति ॥ यो जनः श्रद्धाभरभाजनं सन् श्रद्धारुचिः तस्या भरः प्रचुरता तस्य भाजनं स्थानं भाजनशब्दस्याजहल्लिंगत्वान्नपुंसकत्वं शुभभावनायुक्तः सन् जिनपतेः श्रीवीतरागस्य भावपूजां विधत्ते करोति तस्य जनस्य स्वर्गो देवलोको गृहांगणं गृहस्यांगणवन्निकटो भवति । पुनः शुभा मनोहरा साम्राज्यलक्ष्मीः राज्यऋद्धिस्तस्य सहचरी सार्थवर्तिनी भवति । पुनर्वपुर्वेश्मनि वपुरेव शरीरमेव वेश्म गृहं तस्मिन् सौभाग्यधैर्यौदार्यचातुर्यादिगुणानां आवलिः श्रेणिः स्वैरं स्वेच्छया विलसति आगत्य विलासं करोति तिष्ठतीत्यर्थः । पुनः संसारः सुतरः सुखेन तीर्यते इति सुतरः सुखेन तरीतुं शक्यो भवति। पुनः शिवं मोक्षः अंजसा शीघ्रं तस्य करतलक्रोडे हस्ततलमध्ये लुठति हस्तगोचरो भवतीत्यर्थः ॥ अतो भावार्हतः उत्पन्नकेवलज्ञानाश्चतुस्त्रिंशदतिशयैर्विराजमानाः समवसरणस्थाः इति ॥ यतः ॥ उसरणमवसिरित्ता, चउत्तीसं अइसए निसेवित्ता ॥ धम्मकहं च कहंता, अरिहंता हुंतु मे सरणं ॥ १ ॥ इति वचनात् ॥ भो भव्यप्राणिन् ! एवं ज्ञात्वा मनसि विवेकमानीय अर्हतां भावपूजा कार्या । कुर्वतां च यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरंतु ॥ १० ॥

**जे माणस अत्यंत श्रद्धा सहित श्री वीतरागनी भावपूजा करे छे, तेने देवलोक घरना आंगणानी पेठे ढूकडुं छे, मनोहर राज-**

ऋद्धि तेनी साथे रहेनारी छे, तेना शरीररूप घरने विषे सौभाग्यादि गुणोनी श्रेणी पोतानी इच्छाए (आवीने) विलास करे छे, तेनो ससार सुखथी तरी शकाय एवो थाय छे, अने मोक्ष तो झट तेना हाथ तले आवीने आलोटे छे (१०)

(शिखरिणीवृत्तम्)

कदाचिन्नातंकः कुपित इव पश्यत्यभिमुख,
विदूरे दारिद्र्य चकितमिव नश्यत्यनुदिनम् ॥
विरक्ता कांतेव त्यजति कुगतिः सगमुदयो,
न मुंचत्यभ्यर्ण सुहृदिव जिनार्चा रचयतः ॥ ११ ॥

पुनर्भावपूजाया फलमाह ॥ जिनार्चां श्रीवीतरागस्य वदनादिभावपूजा रचयत कुर्वत पुरुषस्य आतको भय कदाचित् अभिमुख सन्मुख न पश्यति न विलोकयति । क इव ? कुपित इव । यथा कश्चित् कुपितो रुष्टो भवति स यथा तस्य सन्मुख न पश्यति तथेत्यर्थ ॥ पुनर्दारिद्र्य दरिद्रत्व अनुदिन निरतर तस्य दूरे नश्यति दूरे याति । किमिव ? चकितमिव भयभीतमिव । पुनर्नरकादिकुगतिस्तस्य सग समीप त्यजति मुचति । का इव ? विरक्ता कुपिता रुष्टा काता इव स्त्री इव । यथा विरक्ता स्त्री भर्त्तु सग त्यजति तथेत्यर्थ । पुन उदय अभ्युदय प्रतापैश्वर्यादिवृद्धिस्तस्य अभ्यर्ण समीप न मुचति न त्यजति । क इव ? सुहृदिव मित्रमिव ॥ अतोऽर्हता भावपूजा वदनादि कार्या । भो भव्यप्राणिन् ! एव ज्ञात्वा मनसि विवेकमानीय श्रीजिनस्य भावपूजा कर्त्तव्या । कुर्वता च मता यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमागल्क्यमाला विस्तरतु ॥

जिनेश्वर भगवाननी भावपूजा करनारा जनोने, भय तो कोप पाम्यो होय, तेम क्यारे पण सामु जोतो नथी, दारिद्र तो भयभ्रांत थयु होय तेम निरतर दूर नासे छे, कुगति तो विरक्त थएली स्त्रीनी

पेठे संगज तजी दे छे, अने अभ्युदय (प्रताप–ऐश्वर्यादि) मित्रनी पेठे (तेना) समीपपणाने मूकतो नथी. अर्थात् तेनी पासेज रहे छे.

हवे भावपूजानुं माहात्म्य कहे छे.

(शार्दूलविक्रीडितवृत्तम्.)

**यः पुष्पैर्जिनमर्च्चति स्मितसुरस्त्रीलोचनैः सोऽर्च्यते,**
**यस्तं वंदत एकशस्त्रिजगता सोऽहर्निशं वंद्यते ॥**
**यस्तं स्तौति परत्र वृत्रदमनस्तोमेन स स्तूयते,**
**यस्तं ध्यायति क्लृप्तकर्म्मनिधनः स ध्यायते योगिभिः ॥१२॥**

पुनः श्रीजिनभावपूजायाः माहात्म्यमाह ॥ यः पुरुषः पुष्पैः कृत्व जिनं श्रीवीतरागं अर्च्चति पूजयति स पुरुषः स्मितसुरस्त्रीलोचनैः अर्च्य पूज्यते । स्मितानि विकसितानि यानि सुरस्त्रीणां देवांगनानां लोचना नेत्राणि तैः । देवलोके देवत्वेनोत्पन्नः स देवांगनाभिर्विकसितनेत्रैः च्र्यते पूज्यते सरागं अवलोक्यते इत्यर्थः । पुनर्यः पुमान् एकशः एकं श्रीजिनं वंदते स अहर्निशं दिवारात्रौ त्रिजगता त्रिभुवनेन वंद्यते जिनं वंदते स त्रिजगद्वंद्यो भवतीत्यर्थः । पुनर्यः पुमान् तं श्रीजिनं स्तौ वर्णयति स पुमान् परत्र परलोके वृत्रदमनस्तोमेन वृत्रदमनानां इंद्रा स्तोमेन समूहेन स्तूयते गुणस्तुत्या कृत्वा वर्ण्यते । पुनर्यस्तं श्रीजिनं ध्या यति पिंडस्थपदस्थरूपस्थरूपातीतभेदैर्हृदये ध्यानगोचरं करोति स पुमान योगिभिर्योगीश्वरैर्महामुनिभिर्ध्यायते ध्यानगोचरः क्रियते । कथंभूतः सः । क्लृप्तकर्म्मनिधनः क्लृप्तं रचितं कृतं अष्टानां कर्म्मणां निधनं विनाशो येन सः क्लृप्तकर्म्मनिधनः ॥ सिद्धावस्थां प्राप्त इत्यर्थः ॥ १२ ॥ इति पूजायाः प्रस्तावः ॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्त्तिना सूरिणा विहितायां तु, पूजायाः प्रक्रमोऽजनि ॥ १ ॥ इति जिनवरप्रक्रमः ॥

जे पुरुष पुष्पोवडे श्री वीतराग भगवाननी पूजा करे छे, ते देवांगनाओना विकस्वर (प्रफुल्लित) चपला नेत्रोथी पूजाय छे, जे वीतराग भगवानने एक वार पण वदन करे छे, ते रात्री दिवस त्रणे जगत्ना जनोथी वदन पामे छे, जे तेमनी स्तुति करे छे, ते परलोकने विषे इद्रोना समूहथी स्तुति पामे छे अने जे तेमनु ध्यान धरे छे, ते आठ कर्मनो क्षय करीने अर्थात् सिद्ध अवस्था पामीने योगी पुरुषोथी ध्यान कराय छे अर्थात् योगी पुरुषो ते पुरुषनु ध्यान करे छे (१२)

हवे चार काव्ये करी गुरुभक्तिद्वार कहे छे

(वशस्थवृत्तम्)

अवद्यमुक्ते पथि य प्रवर्तते, प्रवर्त्तयत्यन्यजन च निःस्पृहः ॥
स एव सेव्यः स्वहितैपिणा गुरुः, स्वय तरस्तारयितु क्षमः परम् १३

अथ चतुर्भिर्वृत्तैर्गुरुभक्तिद्वारमाह ॥ अवद्यमुक्ते इति ॥ आत्महितवाछकेन पुरुपेण स एव गुरु सेव्य । स क ? य अवद्यमुक्ते पापवर्जिते सत्ये पथि धर्म्ममार्गे स्वय प्रवर्त्तते प्रचलति । च पुन अन्यजन अन्यलोक शुद्धमार्गे प्रवर्त्तयति । गुरुर्नि स्पृह परिग्रहादिवाछारहित सन् । पुनर्य स्वय ससारसमुद्र तरन् सन् पर अन्य तारयितु क्षम समर्थ ॥ गृणाति कथयति तत्त्वमिति गुरु तत्त्वोपदेशक शुद्धप्ररूपक इत्यर्थ ॥ यत ॥ हीणस्स विसुद्ध परू-वगस्स नाणाहियस्स कायव्व ॥ जणचित्तग्गहणत्थ, करति लिंगा विसेस तु ॥ १ ॥ अन्यच्च ॥ दसणभट्ठो भट्ठो, दमणभट्ठस्स नत्थि निव्वाण ॥ सिज्झति चरणरहिया, दसणरहिया न सिज्झति ॥ २ ॥ अत कारणात् य शुद्धप्ररूपक जिनाज्ञाराधक स गुरु सेव्य नतु जमाल्यादय कुगुरव सेव्या । अहाच्छदा उत्सूत्रप्ररूपका स्वमतिकल्पितमतनुसार जिनाज्ञाविराधका मायाविनस्ते तु कुगुरव ॥ एव भो

भव्यप्राणिन्! इति ज्ञात्वा मनसि विवेकमानीय शुद्धप्ररूपको जिनाज्ञाराधको गुरुः सेव्यः ॥ सेव्यमानानां यत् पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरंतु ॥ १३ ॥

जे गुरु, पोते पापरहित मार्गने विषे प्रवर्त्ते छे, अने बीजा माणसने पण ( तेवा मार्ग ) प्रवर्त्तावे छे, पोते जाते निस्पृह छे ( परिग्रहादिकनी वांछा रहित छे), पोते तरे छे अने बीजा माणसने पण तारवाने समर्थ छे; तेज गुरुनी हितवांछक पुरुषोए सेवा करवी योग्य छे. ( १३ )

वली गुरुसेवानुं फल कहे छे.

( मालिनीवृत्तम्. )

विदलयति कुबोधं बोधयत्यागमार्थं,
सुगतिकुगतिमार्गौ पुण्यपापे व्यनक्ति ॥
अवगमयति कृत्याकृत्यभेदं गुरुर्यो,
भवजलनिधिपोतस्तं विना नास्ति कश्चित् ॥ १४ ॥

अथ पुनरपि गुरुसेवायाः फलमाह ॥ विदलयतीति ॥ भो भव्याः! तं गुरुं विनान्यः कश्चित् भवजलनिधिपोतः प्रवहणं नास्ति । भव एव संसार एव जलनिधिः समुद्रस्तत्र पोतः प्रवहणं संसारसमुद्रतारणे प्रवहणसमानं गुरुं विनान्यः कश्चिन्नास्ति । यो गुरुः कुबोधं कुत्सितज्ञानं मिथ्यात्वं विदलयति । पुनर्यो गुरुः आगमार्थं सिद्धांतानां अर्थं बोधयति ज्ञापयति । पुनर्यो गुरुः पुण्यपापे पुण्यं च पापं च पुण्यपापे ते धर्म्माधर्म्मौ द्वे अपि व्यनक्ति प्रकटयति । इदं पुण्यमिदं पापमिति । कथंभूते पुण्यपापे। सुगतिकुगतिमार्गौ सुगतिश्च कुगतिश्च सुगतिकुगती तयोर्मार्गौ पुण्यं देवनरादि सुगतिमार्गः पापं नरकतिर्यग्रूपं कुगतिमार्गः । पुनर्यो गुरुः कृत्याकृत्यभेदं अवगमयति कर्त्तुं योग्यं कृत्यं कर्त्तुमयोग्यं अकृत्यं । कृत्यं च अकृत्यं च

कृत्याकृत्ये तयोर्भेदो विवेको विचारस्तं ज्ञापयति ॥ यथा प्रदेशी नृप महानास्तिकमति केशिगणधरगुरुणा प्रतिबोध्य तत्त्वमार्गे स्थापित ॥ भो भव्यप्राणिन्! एवं ज्ञात्वा मनसि विवेकमानीय ससारसमुद्रतारणाय प्रवहणममानश्रीगुरो सेवा कार्या । गुरो सेवा कुर्वता च सता यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमागलिक्यमाला निस्तरतु ॥ १४ ॥

जे गुरु, मिथ्यात्वनो नाश करे छे, सिद्धातोना अर्थने जणावे छे, जे 'पुण्य ए सुगतिनो मार्ग छे अने पाप ए कुगतिनो मार्ग छे,' एम प्रगट करे छे, अने वली जे करवा योग्य अने नही करवा योग्य कार्यनो विवेक समजावे छे; ते गुरु विना बीजा कोई भवसमुद्रने विषे वहाणनी पेठे तारनार नथी (१४)

(शिखरिणीवृत्तम्)

पिता माता भ्राता प्रियसहचरी सूनुनिवहः,
सुहृत्स्वामी माद्यत्करिभटरथाश्वः परिकरः ॥
निमज्जत जतु नरककुहरे रक्षितुमल,
गुरोर्धर्माऽधर्म्मप्रकटनपरात्कोऽपि न परः ॥ १५ ॥

पुनर्गुरुमेनाया फलमाह ॥ पितामातेति ॥ नरककुहरे नरकविवरमध्ये निमज्जत बुडत पतत सत जतु जीव गुरो परोऽन्य कोऽपि रक्षितु अल न । कोऽपि न समर्थ । कथं? पिता जनको रक्षितु नाल । माता जननी रक्षितु नाल । भ्राता सहोदरो रक्षितु नाल । प्रिया अत्यतवल्लभा सहचरी स्त्री रक्षितु नाल । सूनुनिवह पुत्रगणोऽपि रक्षितु नाल । सुहृन् मित्रमपि रक्षितु नाल न समर्थ । स्वामी नायकोऽपि रक्षितु नाल । कथभूत स्वामी । माद्यत्करिभटरथाश्व । माद्यतो मदोन्मत्ता करिणो गजा भटा सुभटा रथा अश्वाश्च यस्य स एवंविधो बलवान् य स्वामी स रक्षितु नाल । पुन परिकर प्रभृतिसेवकादिवर्गोऽपि नरके पतत सत

त्यागेऽपि किमपि न फलं। पुनः गुरोराज्ञां विना तपोभिः कृतं। पष्ठाष्टम-दशमद्वादशादिपक्षक्षपणमासक्षपणसिंहनिक्रीडितादिभिस्तपोभिः कृतं सपूर्ण जातं अर्थान्न किमपि। पुनर्भावनया शुभभावेनापि पूर्णं जातं। पुनः इंद्रियदमैः पचेंद्रियाणां दमनैः कृत्वा अलं पूर्णं जातं। पुनः आप्तागमैः सूत्रसिद्धांतपठनैरपि पर्याप्तं पूर्णं जातं। तर्हि किं? किंतु गुरुप्रीत्या गरिष्ठवात्सल्येन अधिकादरेण एकं गुरोः शासनं कुरु गुरोरेवाज्ञां शुद्धां पालय। किंभूतं गुरोः शासनं। भवनाशनं ससारपरिभ्रमणवारकं। यतो येनैकेन गुरोः शासनेन आज्ञया विना सर्वेऽपि गुणाः पूर्वोक्ता ध्यानादयः स्वार्थाय स्वस्वफलसाधनाय अलं न समर्था न। किंतु निष्फला इत्यर्थः ॥ किंवत्? विनाथबलवत् निर्नायकसैन्यवत् यथा निर्नायकं सैन्यं जयसाधकं न, तथा गुरोराज्ञां विना क्रियानुष्ठानादिकं सर्वं निष्फलं। गोशालकजमालिकुलवालकनिह्नवादिवत् ॥ एवं ज्ञात्वा गुर्वाज्ञासहितं सर्वं कर्त्तव्यं ॥ यदुक्तं श्रीकल्पसूत्रे ॥ असणवा पाणवा, खाइमवा, साइमवा आहारित्तए ॥ उच्चारवा, पासवणं वा परिट्ठावित्तए ॥ सज्झायं वा करित्तए ॥ धम्मजागरियं वा जागरित्तए ॥ णो से कप्पइ अणापुच्छित्ता ॥ भिक्खू इच्छेज्जा अन्नयरं तवोकम्मं उवसपज्जित्ताणं विहरित्तए ॥ तं चेव सव्वं भाणियव्वं ॥ भो भव्यप्राणिन्! एवं ज्ञात्वा मनसि विवेकमानीय श्रीगुरुसेवा कर्त्तव्या ॥ कुर्वता च सता यत्पुण्यमुत्पद्यते, तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला मिलतु ॥ इति ॥ १६ ॥ सिंदूरप्रकरास्यस्य, व्याख्यायां हर्षकीर्त्तिना सूरिणा विहितायां तु, गुरुसेवनप्रक्रम ॥ २ ॥ इति गुरुसेवनप्रक्रम ॥ २ ॥

**ध्यान करवाथी शुं? सर्व विषयनो त्याग करवाथी पण शुं? तपश्चर्या करवाथी पण शुं? शुभ भावे करीने पण शुं? इंद्रियोना**

दमवाथी पण शुं? तथा सिद्धांतना अभ्यासथी पण शुं? (अर्थात् ए सर्व एकलां—एटले गुरुनी आज्ञा विना निष्फल छे.) माटे अधिक प्रीतिवडे संसारना भ्रमणने नाश करनारां एवां गुरुनां फक्त शिक्षावचन अंगीकार कर; के जेना विना अधिपति (नायक) विनानी सेनानी पेठे (ए उपर कहेला) सर्वे पोतपोतानां फलसाधनने माटे समर्थ नथी अर्थात् निष्फल छे. (१६)

हवे चार काव्ये करी जिनराजे कहेला सिद्धांतनुं माहात्म्य कहे छे.

(शिखरिणीवृत्तम्.)

**न देवं नादेवं न शुभगुरुमेवं न कुगुरुं,**
**न धर्म्मं नाधर्म्मं न गुणपरिणद्धं न विगुणम् ॥**
**न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं,**
**विलोकंते लोका जिनवचनचक्षुर्विरहिताः ॥ १७ ॥**

अथ चतुर्भिर्वृत्तैर्जिनमतस्य जिनोक्तसिद्धांतस्य च माहात्म्यमाह ॥ न देवमिति ॥ लोकाः जिनवचनमेव चक्षुर्नेत्रं तेन रहिताः संतः एतानि वस्तूनि न विलोकंते न पश्यंति न जानंतीत्यर्थः ॥ किं किं न विलोकंते । ते देवं सर्व्वज्ञोजितरागादिरित्यादिलक्षणोपेतं न विलोकंते । पुनः अदेवं कुदेवं ये स्त्रीशस्त्राक्षसूत्राद्यतिलक्षणोपेतं कुदेवं न विलोकंते । पुनः शुभगुरुं सुगुरुं शुद्धप्ररूपकं गुरुं न जानंति । एवं कुगुरुं पंचाचाररहितं उत्सूत्रप्ररूपकं न जानंति । पुनः धर्म्मं अधर्म्मं च न जानंति धर्माधर्मयोरंतरं न विदंतीत्यर्थः ॥ पुनः गुणपरिणद्धं गुणैः परिपूर्णं गुणवंतं न जानंति ॥ पुनर्विगुणं गुणरहितं निर्गुणं च न जानंति । गुणवंतं निर्गुणं च सदृशमेव पश्यंति । पुनः कृत्यं करणीयं कर्त्तुं योग्यं वस्तु न जानंति । पुनः अकृत्यं कर्तुमनुचितं अयोग्यं च न जानंति । कृत्याकृत्यविवेकं न जानंतीत्यर्थः ॥ पुनर्निपुणं सचातुर्यं च सम्यग् यथा स्यात्तथा आत्मनो हितं सुखकारणमपि

न जानति । पुन अहित च अशुभकारण च न जानति। जिनवचनश्रवण विना शुभाशुभयोरतर न जानति॥ यत ॥सुच्चा जाणइ कल्लाण, सुच्चा जाणइ पावग॥ उभयपि जाणई सुच्चा, ज सेय त समायरे ॥१॥ भो भव्यप्राणिन्! एव ज्ञात्वा श्रीजिनप्रणीतसिद्धाताना श्रवण कर्त्तव्य । कुर्व्वता च सता यत्पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमागलिक्यमाला विस्तरतु॥१७॥

जैनशास्त्ररूप चक्षुथी रहित एवा लोको नथी देवने जाणता, के नथी कुदेवने जाणता, नथी सुगुरुने ओलखता के, नथी कुगुरुने ओलखता, नथी जाणता धर्म अधर्मने के, नथी जाणता गुणी, निर्गुणीने, वली करवा योग्य कार्य शु छे? अने नहि करवा योग्य शु छे? ते पण नथी जाणता वली पोताने शु सुखनु कारण छे? अने शु दु खनु कारण छे? ते पण तेओ सारी रीते जाणता नथी (१७)

(शार्दूलविक्रीडितवृत्तम्)

मानुष्य विफल वदंति हृदय व्यर्थ वृथा श्रोत्रयो–
निर्माण गुणदोषभेदकलना तेपामसभाविनीम् ॥
दुर्वार नरकाधकूपपतन मुक्ति वुधा दुर्लभा,
सार्वज्ञ' समयोदयारसमयो येपा न कर्णातिथिः ॥ १८ ॥

मानुष्यमिति । भो भव्यप्राणिन्! सार्वज्ञ सर्वज्ञप्रणीत श्रीवीतरागदेवेन भाषित समय आगमो येपा पुरुषाणा कर्णातिथि कर्णगोचरो न जातो यैर्न श्रुत । वुधा पडितास्तेषा मनुष्याणा मानुष्य मनुष्यजन्म विफल निष्फल वदति । लब्धमप्यलब्ध कथयति । तेपा हृदय चित्त व्यर्थ निरर्थक शून्य वदति । पुनस्तेपा श्रोत्रयो कर्णयोर्निर्माण करण वृथा निष्फल वदति । पुनस्तेपा गुणाना दोपाणा च यो भेदो अतर तस्य कलना विचारणा असभाविनी अर्थात् दुर्लभा वदति । पुन नरकमेव अधकूपस्तृणवल्लीवितानाच्छादित कूपस्तत्र पतन दुर्व्वार वारयि-

तुमशक्यं कथयंति । पुनस्तेषां मुक्तिं दुर्लभां कथयंति जिनागमश्रवणं विना मुक्तिं मोक्षं न प्राप्नुवंति । किंविशिष्टः समयः । दयारसमयः दया कृपा एव रसः स्वरूपं यस्य सः दयारसः तेन प्रचुरः दयारसमयः ॥ अतः श्रीजिनागमश्रवणमेव कर्तव्यं । भावं विनापि श्रुतं हिताय भवति ॥ यथा ॥ द्वेषेऽपि वोधकवचः श्रवणं विधाय, स्याद्रौहिणेय इव जंतुरुदारलाभः ॥ क्राथोऽप्रियोऽपि सरुजां सुखदो रविर्वा, संतापकोऽपि जगदंगभृतां हिताय ॥ १ ॥ किं तद्वचः ? यतः ॥ अणिमिसनयणामणकज्जसाहणा पुप्फदाम अमिलाणा ॥ चउरंगुलेण भूमिं, न छिवंति सुरा जिणा विंती ॥ १ ॥ एवं ज्ञात्वा जिनवचनस्य श्रवणं कर्त्तव्यं । कुर्व्वतां च सतां यत् पुण्यमुत्पद्यते तत्पुण्यप्रसादात् उत्तरोत्तरमांगलिक्यमाला विस्तरंतु ॥ १८ ॥

सर्वज्ञ श्री वीतराग भगवाने कहेलो एवो दयामय आगम, जे पुरुषोना कानमां नथी पड्यो, तेमना मनुष्यजन्मने पंडित जनो निष्फल कहे छे, तेमना चित्तने निरर्थक कहे छे, तेमनी कानइंद्रिनुं वनाववुं वृथा ( नकामुं ) छे, तेमना गुण दोषना विवेकनो विचार पण दुर्लभ छे, तेमनुं नरकरूप अंधकारमय कूवाने विषे पडवुं ते, रोकी राखवुं कठण छे. अने तेमने मुक्ति पण दुर्लभ छे. ( १८ )

पीयूषं विषवज्जलं ज्वलनवत्तेजस्तमःस्तोमव-
न्मित्रं शात्रववत् स्रजं भुजगवच्चिंतामणिं लोष्ठवत् ॥
ज्योत्स्नां ग्रीष्मजघर्मवत् स मनुते कारुण्यपण्यापणं,
जैनेंद्रं मतमन्यदर्शनसमं योदुर्मतिर्मन्यते ॥ १९ ॥

पीयूषमिति ॥ योदुर्मतिर्मूर्खः पुमान् जैनेंद्रं मतं श्रीजिनशासनं अन्यदर्शनसमं अन्यदर्शनैर्बौद्धनैयायिकसांख्यवैशेषिकजैमिनीयादिभिः समं सदृशं मन्यते गणयति स मूर्खः पीयूषं अमृतं विषवत् विषेण तुल्यं मनुते गणयति । पुनर्जलं परमशीतलं पानीयं ज्वलनवत् अग्नितुल्यं गणयति ।

पुन तेज उद्योत तम स्तोमवत् अधकारपुजवत् मनुते । पुनर्मित्र सखाय शात्रववत् वैरीसदृश मनुते जानाति । पुन स्रज पुष्पमाला भुजगवत् सर्पतुल्या गणयति । पुन स चिंतामणिं लोष्ठवत् पाषाणसदृश गणयति। पुन स ज्योत्स्ना कौमुदीं चद्रकांतिं ग्रीष्मजघर्मवत् उष्णकाल आतपवत् मनुते । अत्र पीयूषादिसम जिनदर्शन । विषादिसदृशान्यन्यदर्शनानीत्युपनय । किंभूत जैनेंद्र मत । कारुण्यपण्यापण दयारूपक्रय्यस्य हट्ट ॥ एव मत्वा श्रीजिनमतमेवागीकर्त्तव्य कुर्वता च सता यत् । शेष प्राग्वत् १९

जे मूर्ख जन, करुणारूपी वस्तुना हाट (दुकान) समान एवा जिनेंद्रना शासनने अन्यदर्शन समान माने छे, ते अमृतने झेर समान, जलने अग्नि समान, प्रकाशने अधकारना समूह समान, मित्रने वैरी समान, फुलनी मालाने सर्प समान, चिंतामणिरत्नने पत्थर समान अने चद्रमानी कांतिने उनालाना ताप समान माने छे इहा अमृतादिक समान जैनशासन अने विषादिक समान अन्यदर्शन जाणवु (१९)

धर्म्मं जागरयत्यघ विघटयत्युत्थापयत्युत्पथ,
भित्ते मत्सरमुच्छिनत्ति कुनय मथ्नाति मिथ्यामतिम् ॥
वैराग्य वितनोति पुष्यति कृपा मुष्णाति तृष्णा च य–
त्तज्जैन मतमर्चति प्रथयति ध्यायत्यधीते कृती ॥ २० ॥

धर्म्ममिति ॥ कृती पंडित यत् जैन मत जैनेंद्रमत श्रीजिनशासन जिनोक्तप्रवचन अर्चति पूजयति । पुन प्रथयति विस्तारयति । पुनर्ध्यायति चिंतयति । पुन अधीते पठति । तत् जिनशासन धर्म्म जागरयति धर्म्मस्य जागरण उद्दीपन करोति । पुन अघ पाप विघटयति दूरीकरोति । पुन उत्पथ उन्मार्ग अनाचार उत्थापयति निवारयति । पुन मत्सर गुणिषु द्वेषभाव भित्ते भेदयति विनाशयति । पुन कुनय कुत्सितनय अन्याय उच्छिनत्ति ।

शोऽन्यः कोऽपि नास्ति। पुनर्यस्मै संघाय तीर्थपतिः तीर्थंकरः स्वयं नमस्यति नमस्कारं करोति। व्याख्यानावसरे नमोतित्थस्सेतिभणनात्। पुनर्यस्मात् संघात् सतां सज्जनानां शुभं कल्याणं जायते उत्पद्यते। पुनर्यस्य संघस्य स्फूर्त्तिर्महिमा परा उत्कृष्टा वर्त्तते। पुनर्यस्मिन् संघे गुणा गांभीर्यधैर्यौदार्यादयः मूलगुणोत्तरगुणाश्च वसंति तिष्ठंति। एवं ज्ञात्वा भो भव्यप्राणिन्! मनसि विवेकमानीय श्रीसंघस्य पूजा भक्तिश्च प्रकर्त्तव्या। कुर्व्वतां च सतां०

हे भव्य जीवो! जे संघ, संसारना त्यागने विषे इच्छावाली छे बुद्धि जेनी एवो छतां मुक्तिना साधनने माटे सावधान थाय छे, वली जे पवित्रपणाए करीने तीर्थरूप कहेवाय छे, जेना समान बीजो कोई नथी, जेने तीर्थंकर महाराजा पण व्याख्यानने अवसरे "नमो तित्थस्स" एम कही नमस्कार करे छे, जेनाथी सज्जनोनुं कल्याण थाय छे, जेनो उत्कृष्ट महिमा छे, अने जेने विषे (अनेक) गुणो रहे छे, एवा ते (चतुर्विध) संघनी पूजा करो. (२२)

**लक्ष्मीस्तं स्वयमभ्युपैति रभसा कीर्त्तिस्तमालिंगति,**
**प्रीतिस्तं भजते मतिः प्रयतते तं लब्धुमुत्कंठया॥**
**स्वःश्रीस्तं परिरब्धुमिच्छति मुहुर्मुक्तिस्तमालोकते,**
**यः संघं गुणराशिकेलिसदनं श्रेयोरुचिः सेवते॥ २३॥**

लक्ष्मीति॥ यः पुमान् श्रेयोरुचिः सन् श्रेयसि कल्याणे धर्म्मे वा रुचिरभिलाषो यस्य स श्रेयोरुचिः। ईदृशः सन् श्रीसंघं सेवते। तं पुरुषं लक्ष्मीः संपत् रभसा वेगेन स्वयमात्मना अभ्युपैति सन्मुखमायाति। पुनः कीर्त्तिस्तं पुरुषं आलिंगति आलिंगनं ददाति। पुनः प्रीतिः स्नेहस्तं भजते सेवते। पुनर्मतिर्बुद्धिः उत्कंठया उत्सुकतया कृत्वा तं नरं लब्धुं प्राप्तुं प्रयतते यत्नं करोति। पुनः स्वःश्रीः स्वर्गलक्ष्मीस्तं मुहुर्वारंवारं परिरब्धुं आलिंगितुं इच्छति। पुनर्मुक्तिर्मोक्षस्तं पुरुषं आलोकते पश्यति। किं

विशिष्ट संघ । गुणराशिकेलिसदन गुणसमूहस्य क्रीडागृह । एव ज्ञात्वा संघ सेव्य शेष पूर्ववत् ॥ २३ ॥

गुणोना समूहना क्रीडाघर एवा श्री संघने, कल्याणने विषे रुचिवालो एवो जे पुरुष सेवे छे, ते पुरुषने संपत्ति शट पोतानी मेले सन्मुख आवे छे, कीर्ति आलिंगन दे छे, प्रीति सेवे छे, बुद्धि उत्सुकताथी तेने प्राप्त करवाने प्रयत्न करे छे, स्वर्गलक्ष्मी तेने वारवार आलिंगन देवाने इच्छे छे अने मुक्तिश्री तेने जोया करे छे (२३)

यद्भक्तेः फलमर्हदादिपदवीमुख्य कृषेः सस्यवत्,
चक्रित्व त्रिदशेंद्रतादि तृणवत् प्रासंगिक गीयते ॥
शक्ति यन्महिमस्तुतौ न दधते वाचोऽपिवाचस्पतेः,
संघः सोऽघहरः पुनातु चरणन्यासैः सता मंदिरम्॥२४॥

यद्भक्तेरिति ॥ स श्रीसंघश्चरणन्यासै स्वपादस्थापनै कृत्वा सता सत्पुरुषाणा साधुमनुष्याणा मदिर गृह पुनातु पवित्रयतु । स क ? यद्भक्तेर्यस्य सघस्य भक्ते अर्हदादिपदवीमुख्य तीर्थंकरादिपदप्राप्तिर्मुख्य फल वर्त्तते॥ किंवत् ? कृषे क्षेत्रादे सस्यवत् धान्यवत्। चक्रित्व त्रिदशेंद्रतादि चक्रवर्तित्व इंद्रपदत्वादिक च प्रासंगिक प्रसगादागत फल गीयते कथ्यते । किंवत् । कृषेस्तृणवत् पलालादिवत् । पुनर्यन्महिमस्तुतौ यस्य सघस्य प्रभाववर्णने वाचस्पतेरपि वाचो वाण्य शक्ति सामर्थ्य न दधते न धारयति । किंविशिष्ट संघ । अघहर अघ पाप हरति य स अघहर । इति ज्ञात्वा श्रीसघ स्वगृहे आहूय सम्यक् पूजनीय । शेष प्राग्वत् ॥ २४ ॥ सिंदूरप्रकराख्यस्य, व्याख्याया हर्षकीर्त्तिना॥ सूरिणा विहिताया तु, श्रीसघप्रक्रमोऽजनि ॥ ४ ॥ इति चतुर्थसंघभक्तिप्रस्ताव ॥ ४ ॥

धान्य प्राप्ति जेम खेतीनु फल छे, तेम अरिहंतादिकनी पदवी पण, जे (संघ)नी भक्तिनु मुख्य फल छे, वली जे संघने से-

त्रना घासनी पेटे चक्रवर्तिपणुं, देवेंद्रादिकनी पदवी विगेरे तो प्रसंगथीज (अनायासे—वगर महेनते) मळती कहेवाय छे, अने वळी जेना महिमाना वर्णनने विषे बृहस्पतिनी वाणी पण समर्थ थती नथी, एवो पापने हरण करनारो श्री संघ पोतानां पगलां स्थापन करीने भक्तिवंत जनोना घरने पवित्र करो. (२४)

हवे चार काव्ये करी सर्व जीवोनी दया करवानुं कहे छे.

क्रीडाभूः सुकृतस्य दुष्कृतरजःसंहारवात्या भवो-
दन्वन्नौर्व्यसनाग्निमेघपटली संकेतदूती श्रियाम् ॥
निःश्रेणिस्त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला,
सत्त्वेषु क्रियतां कृपैव भवतु क्लेशैरशेषैः परैः ॥ २५ ॥

अथ हिंसानिषेधेन सर्वसत्त्वेषु दयैव क्रियतामित्याह ॥ क्रीडाभूरिति॥ भो भव्याः! सत्त्वेषु जीवेषु कृपा एव दया एव क्रियतां । परैरन्यैरशेषैः समस्तैः क्लेशैः कायकष्टकरणैः भवतु पूर्यतां मा क्रियतामित्यर्थः ॥ कथंभूता कृपा। सुकृतस्य पुण्यस्य क्रीडाभूः क्रीडास्थानं । पुनः कथंभूता। दुष्कृतरजः संहारवात्या । दुष्कृतं पापं तदेव कर्ममलहेतुत्वात् रज इव रजस्तस्य संहारे संहरणे वात्या वायुसमूहतुल्या । पुनः कथंभूता । भवोदन्वन्नौः भव एव संसार एव उदन्वानिव उदन्वान् समुद्रः तत्र नौः नौका । पुनः कथंभूता । व्यसनाग्निमेघपटली व्यसनानि कष्टान्येव तापहेतुत्वात् अग्नयो वह्नयः तत्र मेघपटली मेघघटासमाना । पुनः किंभूता। श्रियां संपदां संकेतदूती संकेतस्थानप्रापका संकेतिका दूती । पुनः कथंभूता । त्रिदिवौकसः निःश्रेणिः । त्रिदिवं स्वर्ग्गं एव ओको गृहं तस्य सोपानपंक्तिः । पुनः कथंभूता । मुक्तेः प्रियसखी वल्लभवयस्या । पुनः कथंभूता । कुगत्यर्गला कुगतेर्दुर्गतेः अर्गला द्वारपरिघः । इति ज्ञात्वा जीवेषु कृपा क्रियतां ॥ २५ ॥

हे भव्य प्राणियो! अन्य सर्व कायाना दुःखोने रहेवा दईने (अर्थात् अन्य सर्व कायाने कष्ट आपनार तप जपादि न थाय तो रह्यु, पण) सारा कृत्योनु क्रीडास्थान, पापरूपी रजनु हरण करवामा वायुना समूह (वटोळीआ वायरा) समान, भवसमुद्रने विषे नाव समान, क्लेशरूपी अग्निने मेघनी घटा समान, सपत्तिओने सकेत स्थानने विषे पहोचाडनारी दूती समान, स्वर्गनी निसरणी समान, अने मुक्तिस्त्रीनी प्रिय सखी एवी जे जीवदया तेज करो

(शिखरिणीवृत्तम्)

यदि ग्रावा तोये तरति तरणिर्यद्युदयति,
प्रतीच्या सप्तार्चिर्यदि भजति शैत्य कथमपि ॥
यदि क्ष्मापीठ स्यादुपरि सकलस्याऽपि जगतः,
प्रसूते सत्त्वाना तदपि न वधः क्वाऽपि सुकृतम् ॥२६॥

यदि ग्रावेति ॥ यदि ग्रावा पाषाण तोये जले तरति । पुनर्यदि तरणि सूर्य प्रतीच्या पश्चिमाया दिशि उदयति । पुनर्यदि सप्तार्चि अग्नि शैत्य शीतलत्व भजति । पुनर्यदि कथमपि क्ष्मापीठ पृथ्वीमडल सकलस्यापि जगतो निश्चस्य उपरि भवेत् ॥ तदपि सत्त्वाना वध हिंसा क्वापि द्रव्यक्षेत्रकालादौ सुकृत पुण्य न प्रसूते न जनयति । शेष प्राग्वत् २६

जो पत्थर जलने विषे तरे, सूर्य पश्चिम दिशाये उदय थाय, अग्नि कोई पण रीते शीतलपणु पामे, अने पृथ्वीमडल सर्व जगत्नी उपर आवे; तो पण जीवहिंसारूप कार्य क्याय पण पुण्य उत्पन्न करतु नथी (२६)

(मालिनीवृत्तम्)

स कमलवनमग्नेर्वासर भास्वदस्ता-
दमृतमुरगवक्त्रात्साधुवाद विवादात् ॥

**रुगपगममजीर्णाज्जीवितं कालकूटा-**
**दभिलषति वधाद्यः प्राणिनां धर्ममिच्छेत् ॥ २७ ॥**

सकमलेति ॥ यः पुमान् प्राणिनां वधात् धर्म्मं इच्छेत् सः अग्नेः सकाशात् कमलवनं अभिलषति वांछति । तथा भास्वदस्तात् सूर्यास्तगमनात् वासरं अभिलषति । तथा उरगवक्रात् सर्प्पमुखात् अमृतं पीयूषं अभिलषति । पुनः विवादात् कलहात् साधुवादं कीर्त्ति अभिलषति ॥ तथा अजीर्णात् रुगपगमं रोगस्य अपगमं विनाशं अभिलषति । पुनः कालकूटात् विषात् जीवितं प्राणधारणं अभिलषति । शेषं पूर्ववत् ॥२७॥

**जे पुरुष जीवहिंसा थकी धर्मने वांछे छे, ते पुरुष अग्निमांथी कमलना वनने (जोवाने) इच्छे छे, सूर्यना अस्त थया पछी दिवसने जोवानी इच्छा करे छे, वली सर्पना मुख थकी अमृत, क्लेश थकी कीर्ति, अजीर्ण थकी रोगनो नाश, अने झेर खावाथी जीवितने इच्छे छे. (२७)**

( शार्दूलविक्रीडितवृत्तम् )

**आयुर्दीर्घतरं वपुर्वरतरं गोत्रं गरीयस्तरं,**
**वित्तं भूरितरं बलं बहुतरं स्वामित्वमुच्चैस्तरम् ॥**
**आरोग्यं विगतांतरं त्रिजगति श्लाघ्यत्वमल्पेतरं,**
**संसारांबुनिधिं करोति सुतरं चेतः कृपार्द्रांतरम् ॥२८॥**

आयुर्दीर्घतरमिति ॥ कृपया आर्द्रं अंतरं मध्यं यस्य ईदृशं चेतः आयुर्जीवितं दीर्घतरं अधिकं करोति । तथा वपुः शरीरं वरतरं अतिप्रधानं करोति । तथा गोत्रं नाम कुलं वा गरीयस्तरं अतिगरिष्ठं उच्चैर्गोत्ररूपं करोति । तथा वित्तं धनं भूरितरं अतिप्रचुरं करोति । तथा बलं बहुतरं प्राज्यं करोति । तथा स्वामित्वं प्रभुत्वं उच्चैस्तरं सर्व्वोत्कृष्टं

करोति। तथा आरोग्य नीरोगत्व विगतातरं अतररहित करोति । तथा त्रिजगति त्रिभुवने श्लाघ्यत्व श्लाघनीयत्व अत्येतर प्रचुर करोति। तथा ससाराबुनिधिं भवसमुद्र सुतर सुखेन उत्तरितु शक्य करोति ॥ अत्र मेघरथराज्ञ हरिबलधीवरस्य च दृष्टात ॥ २८ ॥ सिंदूरप्रकराख्यस्य, व्याख्याया हर्षकीर्त्तिना ॥ सूरिणा विहिताया तु, हिसाया प्रक्रमोऽजनि ॥ ९ ॥ इति अहिसाप्रस्ताव ॥ ९ ॥

कृपा ( दया ) थकी मीनो छे मध्य भाग जेनो एवु जे मनुष्यनु चित्त, ते आयुष्यने लाबु करे छे, शरीरने सुदर बनावे छे, कुलने म्होटु करे छे, द्रव्यने वधारे छे, बलमा वृद्धि करे छे, म्होटाईने उत्कृष्ट करे छे, निरतर निरोगी राखे छे, त्रण जगत्मा माणसोनी प्रशसा प्राप्त करे छे, अने ससाररूप समुद्रने सुखे तरी शकाय एवो करे छे ( २८ )

हवे चार काव्ये करी सत्य बोल्वाना प्रभावने कहे छे

**विश्वासायतन विपत्तिदलन देवैः कृताराधनं,**
**मुक्तेः पथ्यदन जलाग्निशमन व्याघ्रोरगस्तभनम् ॥**
**श्रेयःसंवनन समृद्धिजनन सौजन्यसजीवनं,**
**कीर्त्तेः केलिवनं प्रभावभवन सत्यं वचः पावनम् ॥२९॥**

अथ सत्यवचनस्य प्रभाव कथयति ॥ विश्वासायतनमिति ॥ भो भव्या ! सत्य वचो हित प्रिय वचन वदत्विति शेष ॥ कथभूत सत्य वच । विश्वासायतन विश्वासस्य आयतन स्थान । पुन कथभूत सत्य वच । विपत्तिदलन विपत्तीना आपदाना फेटक । पुन कथ० देवै सुरै कृताराधन कृत आराधन सेवन यस्य तत् । पुन मुक्ते सिद्धे पथि मार्गे अदन संबल । तथा जलाग्निशमन जलाग्न्योरुपशामक । पुन व्याघ्रोरगस्तभन व्याघ्राणा सिंहाना उरगाणा सर्पाणा च स्तभनकारक । पुन श्रेयसो

मोक्षस्य कल्याणस्य वा संवननं वशीकरणं । पुनः समृद्धिजननं समृद्धीन-संपदां संपादकं । पुनः सौजन्यसंजीवनं सुजनतायाः संजीवनं समुत्पादकं । तथा कीर्त्तेर्यशसः केलिवनं क्रीडारामं । पुनः प्रभावभवनं प्रभावस्य महिम्नो गृहं । पुनः पावनं पवित्रकारकमित्यर्थः ॥ २९ ॥

हे भव्य जनो ! विश्वासना स्थानरूप, आपत्तिओने नाश करनारूं, देवताओए पण जेनुं आराधन करेलुं छे एवुं, मोक्षमार्गने विषे भाता रूप, जल तथा अग्निने शमावनारूं, वाघ तथा सर्पने थंभावनारूं, मोक्षनुं वशीकरण, समृद्धिने उत्पन्न करनारूं, सुजनता निपजावनारूं, कीर्तिनुं क्रीडावन, अने महिमाना घररूप एवुं जे पवित्र सत्यवचन तेज बोलो. ( २९ )

( शिखरिणीवृत्तम् )

यशो यस्माद्भस्मीभवति वनवह्नेरिव वनं,
निदानं दुःखानां यदवनिरुहाणां जलमिव ॥
न यत्र स्याच्छाया तप इव तपःसंयमकथा,
कथंचित्तन्मिथ्यावचनमभिधत्ते न मतिमान् ॥ ३० ॥

यशो यस्मादिति ॥ मतिमान् बुद्धिमान् पुमान् कथंचित् कष्टेऽपि सति तत् मिथ्यावचनं असत्यवचनं न अभिधत्ते न जल्पति । तत् किं? यस्मान्मिथ्यावचनाद्यशः कीर्तिर्भस्मीभवति विनश्यति । कस्मात् किमिव? वनवन्हेर्दावाग्नेर्वनमिव यथा दावानलात् वनं भस्मीभवति । तथा पुनर्यन्मिथ्या वचनं दुःखानां निदानं कारणं । केषां किमिव? अवनिरुहाणां वृक्षाणां कारणं जलमिव । यथा जलं वृक्षाणां कारणं तथा पुनर्यत्र मिथ्यावचने तपःसंयमकथा तपश्चारित्रयोर्वार्त्ताऽपि न । कस्मिन् केव? आतपे सूर्यातपे छाया इव यथाऽतपे छाया न स्यात् तथा ॥ ३० ॥

जेम दावाग्निथी वन भस्म थाय छे, तेम जे असत्य वचनथी, यश भस्म थाय छे (नाश पामे छे), वली जे असत्य वचन, जल जेम वृक्षोना कारण रूप छे, तेम दु खोनु हेतु रूप छे, अने वली जे असत्य वचनने विषे, सूर्यना तडकाने विषे जेम छाया न होय, तेम तप अने सयमनी कथा पण होती नथी, एवा असत्य वचनने बुद्धिमान पुरुषो कष्ट आवे छते पण बोलता नथी (३०)

हवे असत्य वचनना दोप कहे छे

(वशस्थवृत्तम्)

असत्यमप्रत्ययमूलकारण, कुवासनासद्म समृद्धिवारणम् ॥
विपन्निदान परवचनोर्जित, कृतापराध कृतिभिर्विवर्जितम् ॥३१॥

पुनरसत्यवचनस्य दोपानाह ॥ असत्यमिति ॥ इति कारणात् कृतिभि पडितै असत्य कूट विशेपेण वर्जित परिहृत । यतोऽसत्य अप्रत्ययमूलकारण अविश्वासस्य मूलके हेतु । पुन कुवासनाया पापबुद्धे सद्म गृह । पुन समृद्धिवारण समृद्धेर्लक्ष्म्या वारण निराकरण । पुनर्विपन्निदान विपदा कष्टाना निदान कारण । पुन परवचनोर्जित परेपा वचने निप्रतारणे ऊर्जित वलिष्ठ । पुन कृतापराध कृतागस कृतोऽपराधो येन असत्येन तत्कृतापराध अत एव असत्यवचन कृतिभि पडितैर्न वक्तव्य३१

अविश्वासनु मूल कारण, माठी वासना एटले पापबुद्धिनु घर, लक्ष्मीने वारनारू,आपत्तिओनु कारण,अन्य जनोने छेतरवामा वलवान अने अपराधी एवु जे असत्य वचन,तेने पडित जनोए तजेलु छे (३१)

हवे सत्यवचनना प्रभावने कहे छे

(शार्दूलविक्रीडितवृत्तम्)

तस्याऽग्निर्जलमर्णवः स्थलमरिमित्र सुराः किंकराः,
कातार नगर गिरिर्गृहमहिर्माल्य मृगारिर्मृग. ॥

**पातालं बिलमस्त्रमुत्पलदलं व्यालः श्रृगालो विषं,**
**पीयूषं विषमं समं च वचनं सत्यांचितं वक्ति यः ॥३२॥**

अथ सत्यप्रभावं दर्शयति ॥ तस्याग्निरिति ॥ यः पुमान् सत्यांचितं सत्ययुक्तं वचो वचनं वक्ति ब्रूते । तस्य पुंसोऽग्निर्वन्हिः सत्यप्रभावाज्जलं । तथाऽर्णवः समुद्रः स्थलं स्यात् । तथा अरिः शत्रुर्मित्रं स्यात् । पुनः सुरा देवाः किंकराः सेवका आदेशकारिणः स्युः । पुनः कांतारमरण्यं नगरं स्यात् । तथा गिरिः पर्व्वतो गृहं स्यात् । पुनरहिः सर्प्पो माल्यं स्रक् स्यात् । तथा मृगारिः सिंहो मृगो हरिण इव स्यात् । तथा पातालं रसातलं विलं विलरूपं स्यात् । तथाऽस्त्रं शस्त्रं उत्पलदलं कमलपत्रसदृशं स्यात् । तथा व्यालो दुष्टगजः श्रृगाल इव स्यात् । पुनर्विषं हालाहलं पीयूषं अमृतं स्यात् । तथा विषमं संकटस्थानं संपद्रूपं स्यात् सत्यप्रभावतः । अतः सत्यं वक्तव्यं ॥ अत्र वसुराज्ञः क्षीरकदंबकोपाध्यायपुत्रपर्व्वतकनारदयोर्दृष्टांतः ॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्त्तिना ॥ सूरिणा विहितायां तु, मिथ्यावचनप्रक्रमः ॥३२॥ इति षष्ठो मिथ्यावचनप्रक्रमः ६

**जे पुरुष, सत्यता युक्त वचन बोले छे, तेने अग्नि जल समान, समुद्र स्थल समान, शत्रु मित्र समान, देवता सेवक समान, वन नगर समान, पर्वत घर समान, सर्प फूलनी माला समान, सिंह मृग समान, पाताल छिद्र समान, शस्त्र कमलपत्र समान, हस्ती शियाल समान, विष अमृत समान अने विषमस्थान संपत्तिना स्थान समान थाय छे. (३२)**

**हवे अदत्तादान व्रत कहे छे.**

**(मालिनीवृत्तम्.)**

**तमभिलषति सिद्धिस्तं वृणीते समृद्धि-**
**स्तमभिसरति कीर्तिर्मुंचते तं भवार्त्तिः ॥**

स्पृहयति सुगतिस्त नेक्षते दुर्गतिस्त,
परिहरति विपत्त यो न गृह्णात्यदत्तम् ॥ ३३ ॥

अथादत्तादानव्रतमाह ॥ तमभीति ॥ य पुमान् अदत्त अवितीर्णप्रस्तावात् परवित्त किंचिद्वस्तु वा न गृह्णाति त पुरुप सिद्धिर्मुक्तिरभिलपति वाछति । पुनस्त समृद्धिश्चक्रित्वादि सपत् वृणीते । तथा कीर्तिर्यगस्त अभिसरति प्रत्यागच्छति । भवार्त्ति ससारपीडा त मुचते त्यजति । तथा सुगतिर्देवमनुष्यरूपा त स्पृहयति वाछति । तथा दुर्गतिर्नरकतिर्यग्रूपा त पुरुप नेक्षते न पश्यति विपद् आपद् त परिहरति त्यजति ॥ त क² य अदत्त न गृह्णाति ॥ ३३ ॥

जे पुरुष, नहि आपेलु अर्थात् पारकु (काई पण) नथी ग्रहण करतो, ते पुरुषनी मुक्ति इच्छा करे छे, समृद्धि तेने वरे छे, यश तेनी पासे जाय छे, ससारना दु ख तेने तजी दे छे, सुगति ते पुरुषनी वाछा करे छे, दुर्गति तेना सामु जोती नथी, अने विपत्ति तो तेने त्यागज करे छे (३३)

हवे अदत्तदानना उत्कृष्ट गुणो कहे छे

(शिखरिणीवृत्तम्)

अदत्त नादत्ते कृतसुकृतकामः किमपि यः,
शुभश्रेणिस्तस्मिन् वसति कलहसीव कमले ॥
विपत्तस्माद्दूर व्रजति रजनीवाम्बरमणे-
र्विनीत विद्येव त्रिदिवशिवलक्ष्मीर्भजति तम् ॥ ३४ ॥

भूयोप्यदत्तादानस्य परमगुणानाह ॥ अदत्तमिति ॥ य पुमान् कृत सुकृते पुण्येऽभिलाषो येन ईदृश सन् अदत्त परकीय किमपि वस्तु न आदत्ते न गृह्णाति तस्मिन् पुसि शुभश्रेणि कल्याणपरपरा वसति निवास करोति । कस्मिन् केव² कमले कलहसीव । यथा कमले राजहसी वसति

तथा । पुनस्तस्मात् पुरुषात् विपत् कष्टं दूरं व्रजति दूरे याति । कस्मात् केव ? अंबरमणेः सूर्यात् रजनीव । यथा सूर्याद्रात्रिर्दूरे व्रजति तथा । पुनस्त्रिदिवशिवयोः स्वर्गापवर्गयोर्लक्ष्मीः श्रीस्तं भजति सेवते । कं केव ? विनीतं विद्येव यथा विद्या विनीतं विनयान्वितं पुरुषं भजति विद्या आगच्छति तथा ॥ ३४ ॥

**पुण्यनी इच्छा करनारो जे पुरुष, कोई पण अदत्त पदार्थ लेतो नथी, ते पुरुषने विषे, कमलने विषे जेम राजहंसी रमे छे, तेम कल्याणनो समूह वास करे छे. वली सूर्यथी जेम रात्री नासी जाय छे, तेम ते पुरुषथी विपत्ति दूर जती रहे छे, अने जेम विद्या, विनयी पुरुष पासे आवे छे, तेम स्वर्ग अने मोक्षनी लक्ष्मी ते पुरुषने सेवे छे. ( ३४ )**

**हवे बे काव्ये करी अदत्तादानना दोषो कहे छे.**

(शार्दूलविक्रीडितवृत्तम्)

**यन्निर्वर्त्तितकीर्त्तिधर्मनिधनं सर्वागसां साधनं,**
**प्रोन्मीलद्वधबंधनं विरचितक्लिष्टाशयोद्बोधनम् ॥**
**दौर्गत्यैकनिबंधनं कृतसुगत्याश्लेषसंरोधनं,**
**प्रोत्सर्प्पत्प्रधनं जिघृक्षति न तद्धीमानदत्तं धनम् ॥३५॥**

व्यतिरेकेणाह ॥ यन्निर्वर्त्तितेति ॥ धीमान् विद्वान् पुमान् तत् अदत्तं धनं परकीयं वस्तु न जिघृक्षति ग्रहीतुं नेच्छति । तत् किं ? यत् अदत्तं निर्वर्त्तितकीर्त्तिधर्मनिधनं स्यात् निर्व्वर्त्तितं कृतं कीर्त्तिधर्मयोर्निधनं विनाशो येन तत् । तथा सर्व्वागसां साधनं सर्वाणि च तानि आगांसि च सर्वागांसि तेषां सर्व्वापराधानां साधनं हेतुः स्यात् । पुनः प्रोन्मीलद्वधबंधनं वधो लकुटादिताडनं बंधनं रज्ज्वादिना बंधनं प्रोन्मीलंति प्रकटीभवंति वधबंधनानि यत्र तं । पुनर्विरचितं क्लिष्टाशयस्य दुष्टाभिप्रायस्य उद्बो-

धन प्रकटन येन तत् । पुनर्दार्गत्यैकनिबधन दौर्गत्यस्य दारिद्र्यस्य एक अद्वितीय निबधन कारण । पुन कृतसुगत्याश्लेषसरोधन कृत सुगतेराश्लेषस्य आलिंगनस्य सरोधन निवारण येन तत् । पुन प्रोत्सर्प्पत् प्रधन प्रोत्सर्प्पत् प्रसरत् प्रधन मरण यस्मात् तत्तथा । ईदृग अदत्त धीमान् न जिघृक्षति ॥ ३५ ॥

जेनाथी कीर्ति तथा धननो नाश थाय छे, जे सर्व अपराधोनु कारण रूप छे, जेनाथी प्रहार वधन आदि प्रगट थाय छे, जे दुष्ट अभिप्रायने प्रगट करे छे, जे दारिद्रनु एकज कारण छे, जे सुगतिने प्राप्त करता निवारण करे छे, अने जेनाथी मरण थाय छे, एवु जे अदत्त धन, तेने बुद्धिमान पुरुषो ग्रहण करता नथी (३५)

(हरिणीवृत्तम्)

परजनमनःपीडाक्रीडावन वधभावना–
भवनमवनिव्यापिव्यापल्लताघनमडलम् ॥
कुगतिगमने मार्गः स्वर्गापवर्गपुरार्गल,
नियतमनुपादेय स्तेय नृणा हितकाक्षिणाम् ॥ ३६ ॥

पुनरदत्तदोपमाह ॥ परजनेति ॥ नियत निश्चित हितकाक्षिणा हितमिच्छता नृणा पुरुषाणा स्तेय चौर्य्य अनुपादेय अग्राह्य भवति अदत्त अग्रहणीय स्यात् । किंभूत अदत्त । परे च ते जनाश्च तेपा मनासि चित्तानि तेपा पीडा बाधा तस्या क्रीडावन रमणायोद्यान । पुन वधभावनाभवन वधस्य हिंसायाः भावना चिंतन तस्या गृह । पुन अवनिव्यापिव्यापल्लताघनमडल अवन्या व्यापिनी प्रसरणशीला या व्यापत् आपत् सैव लता वल्ली तस्या घनमडल मेघपटल । पुन कुगतिगमने मार्गो अध्वा । पुन स्वर्गापवर्गपुरार्गल स्वर्गापवर्गावेव देवलोकमोक्षावेव पुर नगर तत्र अर्गला परिघ ॥ ईदृग स्तेय हितकाक्षिणा नृणा अग्राह्य स्यात् ॥३६॥

सिंदूरप्रकराख्यस्य, टीकायां हर्षकीर्त्तिभिः ॥ सूरिभिर्विहितायां तु, संपूर्णः स्तेयप्रक्रमः ॥ ७ ॥ इति सप्तमस्तेयप्रक्रमः ॥ ७ ॥

अन्य जनोना मननी पीडाने रमवाना वन समान, हिंसाने चिंतवनना घररूप, पृथ्वीने विषे प्रसरी रहेली जे आपदा रूपी लताओ, तेने वधारवामां मेघना समूह समान, कुगतिने विषे जवाना मार्गरूप, तथा स्वर्ग अने मोक्षपुरीना आगलीआ (ओंगल) रूप, एवुं जे अदत्त (चोरी), ते निश्चे हितवांछक जनोए ग्रहण करवा योग्य नथी. (३६)

हवे मैथुनव्रतनो उपदेश कहे छे.

(शार्दूलविक्रीडितवृत्तम्)

**दत्तस्तेन जगत्यकीर्त्तिपटहो गोत्रे मषीकूर्च्चकः,**
**चारित्रस्य जलांजलिर्गुणगणारामस्य दावानलः ॥**
**संकेतः सकलापदां शिवपुरद्वारे कपाटो दृढः,**
**कामार्त्तस्त्यजति प्रबोधयति वा स्वस्त्रीं परस्त्रीं न यः॥३७॥**

अथ मैथुनव्रतमाश्रित्योपदेशमाह ॥ दत्त इति ॥ यः पुमान् कामार्त्तः कामपीडितः स्वस्त्रीं न प्रबोधयति । वा इति तर्के परस्त्रीं परनारीं न त्यजति तेन पुंसा जगति विश्वे अकीर्त्तिपटहो दत्तः वादितः । निर्मले गोत्रे स्वकीये वंशे मषीकूर्च्चको दत्तः । पुनः चारित्रस्य देशविरतिसर्वविरतिरूपसंयमस्य जलांजलिर्दत्तः । गुणानां गणः समूहः स एव आरामस्तस्य दावानलो वनदवः वनदवाग्निर्दत्तः । पुनस्तेन सकलापदां समस्तकष्टानां संकेतो दत्तः । मिलनस्थानं कथितं । पुनस्तेन शिवपुरद्वारे मुक्तिनगरद्वारे दृढः कपाटो दत्तः । शीलरहितस्य मुक्तिगमनायोगात् ॥ पाठांतरे तु ॥ शीलं येन निजं विलुप्तमखिलं त्रैलोक्यचिंतामणिः । येन त्रैलोक्यचिंतामणिः निजं शीलं विलुप्तं तेन एतानि वस्तूनि कृतानि ॥ ३७ ॥

कामथी पीडायलो जे माणस पोतानी स्त्रीने बोलावतो नथी अने परस्त्रीने तजतो नथी, तेणे जगत्‌ने विषे अपकीर्तिरूप ढोल वगडाव्यो छे, पोताना गोत्रने मशी(मेश)नो कूचो दीधो छे, सयमने जलांजलि आपी छे अर्थात् चारित्र तेनाथी दूर रहे छे, गुणसमूह रूपी उद्यानने विषे दावानल सलगाव्यो छे, सर्व आपत्तिओने पोतानी पासे बोलावी छे, अने मोक्षरूपी नगरीना द्वारने विषे कमाड मजबूत बंध करया छे (३७)

हवे त्रण काव्ये करी शीलव्रतना गुणो कहे छे

व्याघ्रव्यालजलानलादिविपदस्तेषा व्रजति क्षय,
कल्याणानि समुल्लसति विबुधाः सान्निध्यमध्यासते ॥
कीर्त्तिः स्फूर्त्तिमियर्त्ति यात्युपचय धर्मः प्रणश्यत्यघ,
स्वर्निर्वाणसुखानि सनिदधते ये शीलमाबिभ्रते ॥ ३८ ॥

शीलगुणानाह ॥ व्याघ्रेति ॥ ये नरा शील ब्रह्मचर्य आनिभ्रते धरति तेषा पुसा व्याघ्रव्यालजलानलादिविपद क्षय याति, व्याघ्र प्रसिद्ध व्यालो दुष्टगज सर्प्पो वा जल पानीय नदी समुद्रादि अनलो वन्हिस्तेषा विपद कष्टानि तै कृता विपद क्षय व्रजति क्षय याति। पुन कल्याणानि श्रेयासि समुल्लसति वृद्धि प्राप्नुवति । पुनस्तेषा विबुधा देवा सान्निध्य अध्यासते साहाय्य कुर्व्वति। पुनस्तेषा कीर्त्ति स्फूर्ति इयर्त्ति विस्तार याति। पुनस्तेषा धर्मो दानादिविधिरुपचय पोष याति । पुनस्तेषामघ पाप प्रणश्यति नाश याति। पुनस्तेषा स्वर्निर्वाणसुखानि स्वर्गाऽपवर्गसुखानि सनिदधते समीपमायाति। ये शील आनिभ्रते तेषा एतानि भवंति॥

जे माणसो शीलव्रतने धारण करे छे, तेमनी वाघ, सर्प, जल, अग्नि प्रमुख आपत्तिओ नाश पामे छे, कल्याण वृद्धि पामे छे, देवताओ सहाय्य करे छे, कीर्त्ति विस्तार पामे छे, धर्म पोषण

(वृद्धि) पामे छे, पाप नाश पामे छे, तथा स्वर्ग अने मोक्षनां सुख पासे आवे छे. (३८)

(मालिनीवृत्तम्)

हरति कुलकलंकं लुंपते पापपंकं,
सुकृतमुपचिनोति श्लाघ्यतामातनोति ॥
नमयति सुरवर्गं हंति दुर्गोपसर्गं,
रचयति शुचिशीलं स्वर्गमोक्षौ सलीलम् ॥ ३९ ॥

पुनश्च हरति कुलेति ॥ शुचि निर्मलं शीलं ब्रह्मव्रतं कुलस्य कलंकं मलिनतां हरति नाशयति। पुनः शीलं पापमेव पंकं कर्दमं लुंपते छिनत्ति। पुनः शुचि निर्मलं शुद्धं शीलं सुकृतं पुण्यं उपचिनोति वर्द्धयति। पुनः श्लाघ्यतां प्रशस्यतां आतनोति विस्तारयति। पुनः शीलं सुरवर्गं नमयति। देवसमूहं नम्रीकरोति। पुनः शीलं दुर्गोपसर्गं रौद्रोपसर्गं उपद्रवं हंति। पुनः शीलं कर्तृ सलीलं यथास्यात्तथा लीलयैव हेलामात्रेण स्वर्गमोक्षौ रचयति ददातीत्यर्थः ॥ ३९ ॥

निर्मल एवुं शीलव्रत कुलना कलंकनुं हरण करे छे, पापरूपी कादवने लोपे छे, सुकृत्यनी वृद्धि करे छे, प्रशंसानो विस्तार करे छे, देवताओना समूहने नमावे छे, भयंकर उपसर्गोने हणे छे, तथा रमतमात्रमां स्वर्ग अने मोक्षने आपे छे. (३९)

(शार्दूलविक्रीडितवृत्तम्)

तोयत्यग्निरपि स्रजत्यहिरपि व्याघ्रोऽपि सारंगति,
व्यालोऽप्यश्वति पर्वतोऽप्युपलति क्ष्वेडोऽपि पीयूषति ॥
विघ्नोऽप्युत्सवति प्रियत्यरिरपि क्रीडातडागत्यपां,
नाथोऽपि स्वगृहत्यटव्यपि नृणां शीलप्रभावाद्ध्रुवम् ॥४०॥

पुनः शीलप्रभावात् इह लोकेऽपि कष्टानि यांतीत्याह ॥ तोयत्यग्नि-

रिति ॥ नृणा मनुष्याणा ध्रुव निश्चित शीलप्रभावात् अग्निरपि तोयति तोयमिवाचरति जलवत् शीतल स्यात्। तथा अहिरपि सर्पोऽपि स्रजति स्रक् इव पुष्पमालेव आचरति । पुन शीलप्रभावात् व्याघ्रोऽपि सिंहोऽपि सारगति सारग इव हरिण इवाचरति । पुनर्व्यालोऽपि दुष्टगजोऽपि अश्वति अश्व इवाचरति । पर्वतोऽपि उपलति उपल इवाचरति सामान्यपाषाण इवाचरति । क्ष्वेडोऽपि विषमपि पीयूषति अमृतमिव भवति । विघ्नोऽप्यतरायोऽपि आपदपि उत्सवति उत्सव इवाचरति विघ्नोऽप्युत्सव एव भवति । तथा अरिरपि शत्रुरपि प्रियति प्रिय इवाचरति शत्रुरपि प्रिय एव भवति । तथा अपानायोऽपि समुद्रोऽपि क्रीडातडागति क्रीडातडाग इवाचरति खेलनसरोवरमिवाचरति । अटव्यपि अरण्यमपि स्वगृहति स्वगृहमिवाचरति । नृणा शीलप्रभावादेतानि वस्तूनि भवति ॥ अत्र सुदर्शनश्रेष्ठिकथा १, वकचूलकथा २, रावणकथा ३ ॥ ४० ॥ सिंदूरप्रकराख्यस्य, व्याख्याया हर्षकीर्तिभि ॥ सूरिभिर्निर्मिताया तु, शिलस्य प्रक्रमोऽजनि ॥ ८ ॥ इत्यवलप्रक्रम ॥ ८ ॥

शीलव्रतना प्रभावथी मनुष्यने निश्चे अग्नि जल समान, सर्प पुष्पनी माला समान, वाघ हरिण समान, हस्ती अश्व समान, पर्वत पत्थर समान, विष अमृत समान, विघ्न उत्सव समान, शत्रु मित्र समान, समुद्र क्रीडा करवाना सरोवर समान अने अटवी पोताना घर समान थाय छे (४०)

हवे चार काव्ये करी परिग्रहना दोषो कहे छे

कालुष्य जनयन् जडस्य रचयन् धर्मद्रुमोन्मूलन,
क्लिश्यन्नीतिकृपाक्षमाकमलिनीर्लोभाम्बुधि वर्द्धयन् ॥
मर्यादातटमुद्रुजन् शुभमनोहसप्रवास दिशन्,
किं न क्लेशकरः परिग्रहनदीपूरः प्रवृद्धि गतः ॥ ४१ ॥

अथपरिग्रहदोषमाह ॥ कालुष्यमिति । परिग्रहो धन-धान्य-क्षेत्र-गृह-रूप्य-सुवर्ण-कूप्य-द्विपद-चतुष्पदानां संग्रहो मूर्च्छा स एव नदीपूरः सरित्प्रवाहः प्रवृद्धि गतः उपचयं प्राप्तः सन् किं क्लेशकरः कष्टदायी न स्यात्? अपि तु स्यादेव। किं कुर्व्वन् जडस्य परिग्रहं संग्रहं कर्तुर्मूर्खजनस्य कालुष्यं क्लिष्टाध्यवसायत्वं जनयन् उत्पादयन्। अन्योऽपि नदीपूरो वृद्धः सन् जलस्य पानीयस्य कालुष्यं जनयति । डलयोरैक्यं जडस्य जलस्य । पुनः किं कुर्व्वन्। धर्म्म एव द्रुमो वृक्षस्तस्योन्मूलनं उत्पाटनं रचयन् कुर्व्वन्। अन्योऽपि नदीपूरः प्रवृद्धो वृक्षाणां उत्पाटनं करोति। पुनः किं कुर्व्वन्। नीतिकृपाक्षमाकमलिनीः। नीतिर्न्यायः । कृपा दया। क्षमा क्षांतिः। ता एव कमलिन्यः ताः क्लिश्यन् पीडयन् । अन्योपि नदीपूरः कमलिनीः पीडयति । पुनः किं कुर्व्वन्। लोभांबुधिं वर्द्धयन्। लोभ एव अंबुधिः समुद्रस्तं वर्द्धयन् वृद्धिं नयन् ॥यतः॥ जहा लाहो तहा लोहो, लाहालोहो पवड्ढई ॥ दोमासा कयं कज्जं, कोडिएवि न निट्ठियं ॥ १ ॥ इति ॥ पुनः किं कुर्व्वन्। धर्मस्य मर्यादा एव तटं चरणविधिरूपं तटं उद्रुजन् पीडयन् भंजन्। अन्योऽपि नदीपूरः प्रवृद्धः सन् तटं पातयति। पुनः किं कुर्व्वन्। शुभमनोहंसप्रवासं दिशन्। शुभं धर्मध्यानसहितं यन्मनस्तदेव हंसस्तस्य प्रवासं परदेशगमनं दिशन् आदिशन्। अन्योऽपि नदीपूरो हंसान् उड्डापयति। ईदृशो मूर्च्छापरिग्रहः क्लेशकरः स्यात्॥

जेम वृद्धि पामेलुं नदीनुं पूर, निर्मल जलने मलिन करे छे, तेम वृद्धि पामेलुं परिग्रह रूपी नदीनुं पूर पण मूर्ख मनुष्योना चित्तने मलिन करे छे. जेम वृद्धि पामेलुं नदीनुं पूर, कांठे रहेला वृक्षोने उखेडी नांखे छे, तेम वृद्धि पामेलुं परिग्रह रूपी नदीनुं पूर पण धर्मरूपी वृक्षनुं उन्मूलन करे छे. जेम वृद्धि पामेलुं नदीनुं पूर कमलिनीओने पीडा करे छे, तेम वृद्धि पामेलुं परिग्रह रूपी नदीनुं

पूर पण नीति, दया अने क्षमारूप कमलिनीने पीडा करे छे जेम वृद्धि पामेलु नदीनु पूर समुद्रने वृद्धि पमाडे छे, तेम वृद्धि पामेलु परिग्रहरूपी नदीनु पूर पण लोभरूपी समुद्रने वृद्धि पमाडे छे जेम वृद्धि पामेलु नदीनु पूर काठाओने तोडी नाखे छे, तेम वृद्धि पामेलु परिग्रह रूपी नदीनु पूर पण धर्मरूप मर्यादाना तट रूप चारित्रने उखेडी नाखे छे तेमज वृद्धि पामेलु नदीनु पूर जेम हसोने उडाडी मूके छे, तेम वृद्धि पामेलु परिग्रह रूपी नदीनु पूर पण शुभमन रूपी हसने उडाडी मूके छे पण जे नवविध परिग्रह रूपी नदीनु पूर, ते वृद्धि पामे छते शु क्लेशकारी नथी ? अर्थात् छेज (४१)

(मालिनीवृत्तम्)

कलहकलभविंध्यः क्रोधगृध्रश्मशान,
व्यसनभुजगरध्र द्वेपदस्युप्रदोपः ॥
सुकृतवनदवाग्निर्मार्दवाभोदवायु-
र्नयनलिनतुषारोऽत्यर्थमर्थानुरागः ॥ ४२ ॥

भूयोपि परिग्रहदोपानाह ॥ कलहेति ॥ अत्यर्थं अर्थानुराग । परिग्रहोपरि मूर्च्छाराग ईदृशोऽस्ति । कथभूत । कलह एव कलभो बालहस्ती तस्य विंध्यो विंध्याचल । यथा विंध्याचले कलभ क्रीडति तथाऽत्यर्थं अर्थानुरागे द्रव्यरागे कलहो भवति। तथा क्रोधगृध्रश्मशान क्रोध एव गृध्र पक्षिविशेषस्तस्य श्मशान प्रेतवन । गृध्र श्मशाने रमते तथात्र क्रोध । पुन व्यसनमेव कष्टमेव भुजग सर्पस्तस्य निल । पुनर्द्वेष एव दस्युश्चौरस्तस्य प्रदोष सध्यासमय प्रदोषे चौराणा बल भवति तथा। पुन सुकृतमेव पुण्यमेव वन तस्य दावाग्निर्दावानल । पुनर्मार्दवाभोदवायु मार्दव मृदुत्व कोमलत्व तदेव अभोदो मेघस्तत्र वायु । पुनर्नयो

---

१ धन, धान्य, क्षेत्र घर, रुपु, सोनु, त्रांबु पीतल, द्विपद अने चतुष्पद

न्याय एव नलिनं कमलं तत्र तुपार इव तुपारो हिमं। अत्यर्थ द्रव्यानुरागो लोभः ईदृशोऽस्ति । अतो न कर्त्तव्यः ॥ ४२ ॥

**द्रव्यने विषे अत्यंत प्रीति छे, ते क्लेशरूपी हस्तीने रहेवाना विंध्याचल समान छे, क्रोधरूपी गृध्रपक्षीने रहेवाने स्मशान तुल्य छे, दुःखरूपी सर्पने रहेवाने राफडा समान छे, अने द्वेषरूपी चोरने संध्या (रात्री) समान छे, वळी ते पुण्यरूपी वनने (बाळवाने) दावाग्नि समान, नम्रतारूपी मेघने (नाश करवाने) वायु समान अने न्यायरूपी कमलिनी(पोयणी)ने (नाश करवाने) हीम समान छे. (४२)**

(शार्दूलविक्रीडितवृत्तम्)

**प्रत्यर्थी प्रशमस्य मित्रमधृतेर्मोहस्य विश्रामभूः,**
**पापानां खनिरापदां पदमसद्ध्यानस्य लीलावनम् ॥**
**व्याक्षेपस्य निधिर्मदस्य सचिवः शोकस्य हेतुः कलेः,**
**केलीवेश्म परिग्रहः परिहृतेर्योग्यो विविक्तात्मनाम् ॥४३॥**

पुनः परिग्रहदोपमाह ॥ भो भव्याः! अयं परिग्रहो मूर्च्छाधिक्यं विविक्तात्मनां विवेकवतां पुंसां परिहृतेः परिहारस्य योग्यः । परिग्रहः कीदृशः । प्रशमस्योपशमस्य प्रत्यर्थी शत्रुः । पुनः अधृतेः असंतोषस्य मित्रं सुहृत् । पुनर्मोहस्य मूढस्य मोहनीयकर्मण एव विश्रामस्थानं । पुनः पापानां अशुभकर्मणां खनिः खानिः । पुनरापदां कष्टानां पदं आस्पदं । पुनरसद्ध्यानस्य आर्त्तरौद्रध्यानस्य लीलावनं क्रीडावनं । पुनर्व्याक्षेपस्य व्याकुलत्वस्य निधिर्निधानं । पुनर्मदस्याऽहंकारस्य सचिवो मंत्री । पुनः शोकस्य हेतु. कारणं । पुनः कलेः कलहस्य केलीवेश्म क्रीडागृहमित्यर्थः ॥

**उपशमना शत्रुरूप, असंतोपना मित्र समान, मोहनी विश्रामभूमि, पापनी खाण, आपत्तिओनुं स्थान, अशुभध्याननुं क्रीडावन, व्याकुल-**

तानो निधान, अहंकारनो मंत्री, शोकनो हेतु, अने क्लेशने रमवानुं घर, एवो जे परिग्रह छे, ते विवेकी पुरुषोए तजवा योग्य छे (४३)

वन्हिस्तृप्यति नेंधनैरिह यथा नांभोभिरंभोनिधि,-
स्तद्वन्मोहघनो घनैरपि धनैर्जंतुर्न संतुष्यति ॥
न त्वेवं मनुते विमुच्य विभवं निःशेषमन्यं भवं,
यात्यात्मा तदहं मुधैव विदधाम्येनांसि भूयांसि किम् ४४

वह्निरिति ॥ यथा वन्हिरग्निः घनैरपि इंधनैः समिद्भिर्न तृप्यति न तृप्तिं याति । पुनर्यथा अंभोनिधिः समुद्रः अंभोभिर्जलैः कृत्वा न तृप्यति । तद्वत् जंतुः प्राणी कदाचित् घनैरपि बहुभिर्धनैर्द्रव्यैः कृत्वा न संतुष्यति । कथंभूतो जंतुः । मोहेन घनो निबिडः । तु पुनः जंतुः एवं न मनुते न जानाति । यदय आत्मा जीवो निःशेषं समस्तं विभवं द्रव्यं विमुच्य त्यक्त्वा अन्यं भवं अपरं जन्म परभवं याति । तत्तस्मात् कारणात् अहं मुधैव वृथैव भूयांसि प्रचुराणि एनांसि पापानि किमर्थं विदधामि करोमि ? एवं न जानाति ॥ ४४ ॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्त्तिभिः ॥ सूरिभिर्विहितायां तु, प्रक्रमोयं परिग्रहे ॥९॥ इति परिग्रहप्रक्रमः ॥ ९ ॥ अत्र नंदराज मम्मणकथा ॥

जेम आलोकने विषे घणा काष्टथी अग्नि अने जलथी समुद्र तृप्ति पामतो नथी, तेम मोहथी व्याप्त एवो जीव घणा द्रव्यथी पण संतोष पामतो नथी तो पण ते एम नथी मानतो के, आत्मा तो समस्त वैभवने तजी दइने बीजो जन्म प्राप्त करे छे, माटे हुं शा माटे नकामा घणां पाप करूं ? (४४)

हवे बे काव्ये करी क्रोध जीतवानो उपदेश कहे छे

यो मित्रं मधुनो विकारकरणे संत्राससंपादने,-
सर्प्पस्य प्रतिबिंबमंगदहने सप्तार्चिषः सोदरः ॥

**चैतन्यस्य निषूदने विषतरोः सब्रह्मचारी चिरं,**
**स क्रोधः कुशलाभिलापकुशलैः प्रोन्मूलमुन्मूल्यताम् ॥४५॥**

अथक्रोधजयार्थमुपदेशमाह ॥ यो मित्रमिति ॥ भो लोकाः ! कुशलाभिलापकुशलैः आत्मनः श्रेयोवांछाचतुरैर्नरैः सः क्रोधः कोपो निर्मूलं समूलं यथा स्यात्तथा उन्मूल्यतां उच्छिद्यतां । सः कः ? यः क्रोधः विकारकरणे चित्तादिविकारविधाने मधुनो मद्यस्य मित्रं सुहृत् । पुनर्यः क्रोधः संत्राससंपादने भयजनने सर्प्पस्य प्रतिबिंबं सर्प्पसदृशं । पुनर्यः क्रोधोऽगदहने शरीरप्रज्वालने सप्तार्चिषोऽग्नेः सोदरः अग्नेर्भ्राता । पुनर्यः क्रोधश्चैतन्यस्य ज्ञानस्य निषूदने नाशने विषतरोर्विषवृक्षस्य चिरमतिशयेन सब्रह्मचारी सार्थी ॥ ४५ ॥

**जे क्रोध, ( चित्तने विषे ) विकार करवामां मद्यनो मित्र छे. तथा त्रास उत्पन्न करवामां सर्पना प्रतिबिंब समान, शरीरने बालवाने अग्निना बंधु समान, अने ज्ञाननो नाश करवामां अतिशयपणे विषवृक्षना साधर्मिक समान छे; ते क्रोधनो पोताना हितनी वांछामां कुशल एवा पुरुषोए मूलथीज उच्छेद करवो. ( ४५ )**

(हरिणीवृत्तम्)

**फलति कलितश्रेयःश्रेणिप्रसूनपरंपरः,**
**प्रशमपयसा सिक्तो मुक्तिं तपश्चरणद्रुमः ॥**
**यदि पुनरसौ प्रत्यासत्तिं प्रकोपहविर्भुजो,**
**भजति लभते भस्मीभावं तदा विफलोदयः ॥ ४६ ॥**

फलतीति ॥ तपश्चारित्ररूप एव द्रुमो वृक्षः मुक्तिं मोक्षं फलति निष्पादयति । कथंभूतः । कलितश्रेयःश्रेणिप्रसूनपरंपरः । कलिता उत्पादिता श्रेयसां पुण्यानां कल्याणानां श्रेणिः राजिरेव प्रसूनानां पुष्पाणां परंपरा पंक्तिर्येन सः । पुनः कथंभूतः । प्रशमपयसा उपशम एव जलं

तेन सिक्त सेक प्रापित यदि पुन परंतु असौ तपश्चरणद्रुम प्रकोपहविर्भुज क्रोधवन्हे प्रत्यासत्तिं समीप भजति आश्रयति, तदा भस्मीभाव भस्मरूपता लभते प्राप्नोति । कथभूत । विफलोदय । विगत फलस्य उदयो यस्मात् फलोदयरहित ॥ ४६ ॥

जेणे कल्याणनी पंक्तिरूप पुण्यनी श्रेणिने उत्पन्न करी छे, अने जे शमतारूपी जलथी सिंचायुं छे एवुं जे तप चारित्ररूपी वृक्ष छे, ते मोक्षने आपे छे, परंतु जो ए वृक्ष क्रोधरूपी अग्निनी पासे जाय, तो ते फल नहि प्राप्त करता भस्म थई जाय छे (४६)

हवे बे काव्ये करी क्रोधना दोषो कहे छे

(शार्दूलविक्रीडितवृत्तम्)

संतापं तनुते भिनत्ति विनयं सौहार्दमुत्सादय-
त्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिम् ॥
कीर्त्तिं कृतति दुर्मतिं वितरति व्याहति पुण्योदयं,
दत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः सताम् ॥४७॥

पुन क्रोधस्य दोषमाह ॥ संतापमिति ॥ स रोष क्रोध सता सत्पुरुषाणा हातु त्यक्तु उचितो योग्योऽस्ति । कथभूत रोष । सदोष अनेकदोषै सहित । स क १ यो रोष सताप चित्तोद्वेग तनुते विस्तारयति । पुनर्यो रोषो विनय विनयगुण भिनत्ति विदारयति विनाशयति । पुनर्य सौहार्दं मित्रभाव उत्सादयति विनाशयति । पुनर्य उद्वेग उच्चाट जनयति । पुनर्य अवद्यवचन असत्यवचन सूते उत्पादयति । पुनर्य कलिं कलह विधत्ते करोति । पुनर्यो रोष कीर्त्तिर्यश कृतति छिनत्ति । पुनर्यो दुर्मतिं दुष्टबुद्धि वितरति दत्ते । पुनर्य पुण्योदय धर्मस्य उदय व्याहति विनाशयति । पुनर्य कुगतिं नरकतिर्यग्गतिं दत्ते । स रोष सता हातुमुचित ॥

जे क्रोध संतापने विस्तारे छे, विवेकने भेदी नांखे छे, मित्रतानो नाश करे छे, उद्वेग उत्पन्न करे छे, असत्य वचनने जन्म आपे छे, क्लेश करावे छे, कीर्त्तिनुं उच्छेदन करे छे, दुष्टमति विस्तारे छे, पुण्यना उदयनो नाश करे छे अने कुगतिए लई जाय छे एवो जे दोष युक्त क्रोध, ते सत्पुरुषोए तजवा योग्य छे. (४७)

योधर्म्मं दहति द्रुमं दव इवोन्मथ्नाति नीतिं लतां,
दंती वेंदुकलां विधुंतुद इव क्लिश्नाति कीर्त्तिं नृणाम् ॥
स्वार्थं वायुरिवांबुदं विघटयत्युल्लासयत्यापदं,
तृष्णां घर्म इवोचितः कृतकृपालोपः स कोपः कथम् ॥४८॥

यो धर्म्ममिति ॥ सः कोपः क्रोधः कथं केनोपायेनोचितो योग्यः स्यात् ? अपि तु न कथमप्युचितः । सः कः ? यः कोपो धर्म्मं श्रेयो दहति भस्मीकरोति । कः कमिव ? दवो दावानलो द्रुममिव । यथा दावानलो द्रुमं वृक्षं दहति । पुनर्यो नीतिं न्यायं उन्मथ्नाति उन्मूलयति । कः कामिव ? दंती हस्ती लतामिव । यथा हस्ती लतामुन्मूलयति । नृणां मनुष्याणां कीर्त्तिं क्लिश्नाति पीडयति गमयति । कः कामिव ? विधुंतुदो राहुरिंदुकलां चंद्रलेखामिव । पुनर्यो रोषः स्वार्थं विघटयति स्फेटयति । कः कमिव ? वायुरंबुदमिव । यथा वायुर्मेघं विघटयति । पुनर्यः आपदं कष्टं उल्लासयति विस्तारयति । कः कामिव ? घर्मः ग्रीष्मः तृष्णामिव । यथातपस्तृषां वर्द्धयति । कथंभूतः कोपः । कृतः कृपायाः लोपो विनाशो येन सः ॥४८॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्तिभिः॥ सूरिभिर्विहितायां तु, क्रोधस्य प्रक्रमोऽजनि ॥१०॥ इति दशमः क्रोधप्रक्रमः ॥१०॥

जेम दावाग्नि वृक्षने बाले छे, तेम जे क्रोध धर्मने बाली नांखे छे; जेम हस्ती वृक्षनी लतानुं उन्मूलन करे छे, तेम जे क्रोध नीतिरूपी लतानुं उन्मूलन करे छे; जेम राहु चंद्रनी कलाने क्लेश

पमाडे छे, तेम जे क्रोध मनुष्यनी कीर्तिने नाश पमाडे छे, जेम वायु मेघनो विनाश करे छे, तेम जे क्रोध स्वार्थनो विनाश करे छे, जेम ग्रीष्मकाल तृष्णा(तृषा)ने वधारे छे, तेम जे क्रोध आपत्तिने वधारे छे, अने जे दयानो लोप करे छे, एवो ते क्रोध करवो योग्य केम होय? (४८)

हवे चार काव्ये करी अहंकारना दोषो कहे छे

(मंदाक्रांतावृत्तम्)

**यस्मादाविर्भवति विततिर्दुस्तरापन्नदीनां,**
**यस्मिन् शिष्टाभिरुचितगुणग्रामनामापि नास्ति ॥**
**यश्च व्याप्तं वहति वधधीधूम्यया क्रोधदावं,**
**तं मानाद्रिं परिहर दुरारोहमौचित्यवृत्तेः ॥ ४९ ॥**

अथ मानस्य अहंकारस्य दोषानाह ॥ यस्मादिति । भो भव्यप्राणिन् ! औचित्यवृत्ते उचिताचारकरणात् । तद्योग्यविनयविधानात् तं मानाद्रिं मान एव अहंकार एव अद्रिस्तं अहंकारपर्वतं परिहर त्यज मुंच । तं कं? यस्मान्मानाद्रेर्दुस्तरा तरीतुं अशक्या आपन्नदीनां कष्टरूपनदीनां विततिः श्रेणिराविर्भवति प्रकटीभवति । अन्यस्मादप्यद्रेर्नदीविततिः प्रादुर्भवति । तथा यस्मिन्मानाद्रौ शिष्टाभिरुचितगुणग्रामनामापि नास्ति । शिष्टानां उत्तमानां अभिरुचिताः प्रीतिदायिनो ये गुणा ज्ञानादय औदार्यादयो वा तेषां ग्रामः समूहस्तस्य नामापि नास्ति । गुणानां लवलेशोऽपि न । पुनर्यो मानाद्रिः क्रोधदावं क्रोधदावानलं वहति धत्ते । कथंभूतं क्रोधदावम् । वधधीधूम्यया व्याप्तं हिंसाबुद्धिधूमसमूहेनाढ्यं । पुनः कथंभूतं क्रोधदावं । दुरारोहं आरोढुमशक्यं । अथवा औचित्यवृत्ते योग्यवृत्ते दुरारोहम् ॥ ४९ ॥

जेथी न तरी शकाय एवी आपत्तिरूपी नदीओनी पंक्ति प्रगट थाय छे, तथा जेने विषे उत्तम पुरुषोने प्रीतिकर एवा गुणोना समूहनुं नाम पण नथी, वली जे हिंसाबुद्धि रूपी धूमाडाथी व्याप्त एवा क्रोधरूपी दावानलने वहन करे छे, अने चढवाने पण कठण छे एवो जे मानरूपी पर्वत, तेनो योग्य विनयथी त्याग करो. (४९)

(शिखरिणीवृत्तम्.)

शमालानं भंजन् विमलमतिनाडीं विघटयन्,
किरन् दुर्व्वाक्पांशूत्करमगणयन्नागमश्रृणिम् ॥
भ्रमन्नूर्व्यां स्वैरं विनयनयवीथीं विदलयन्,
जनः कं नानर्थं जनयति मदांधो द्विप इव ॥ ५० ॥

भूयोऽपि मानदोषानाह ॥ शमालानमिति ॥ मदेन अहंकारेण अंधो गतभावेक्षणो जनः कं कं अनर्थं न जनयति नोत्पादयति ? अपि तु सर्व्वं अनर्थं जनयति । क इव ? द्विप इव मत्तगज इव । यथा मदांधो द्विपोऽनर्थं उपद्रवं जनयति । किं कुर्व्वन् ? शमालानं भजन् शम एव उपशम एवालानः गजबंधनस्तंभस्तं भंजन् उन्मूलयन् । पुनः किं कुर्व्वन् ? विमलमतिनाडीं निर्मलबुद्धिमेव नाडीं बंधनरज्जुं विघट्टयन् त्रोटयन् । पुनः किं कुर्व्वन् ? दुर्व्वाक्पांशूत्करं दुर्वागेव दुर्वचनमेव पांशुर्धूलिस्तस्याः उत्करं समूहं किरन् विक्षिपन् । पुनः आगम एव सिद्धांत एव श्रृणिः अंकुशस्तं अगणयन् अविचारयन् अवमानयन् । ऊर्व्यां पृथ्व्यां स्वैरं स्वेच्छया भ्रमन् विचरन् । पुनर्विनयनयवीथीं विनय एव नयवीथी न्यायश्रेणिस्तं विदलयन् विध्वंसयन् । अन्योऽपि मदांधो हस्ती एतानि वस्तूनि करोति ॥

जेम मदोन्मत्त हस्ती आलानस्थंभने तोडी नांखे छे, तेम अहंकारथी अंध थएलो माणस पण शमता रूपी आलानस्थंभने तोडी नांखे छे. जेम मदोन्मत्त हस्ती मजबूत सांकलने तोडी नांखे छे,

तेम अहंकारथी अंध थएलो माणस पण निर्मल बुद्धिरूप साकलने तोडी नाखे छे जेम मदोन्मत्त हस्ती धूलना समूहने उडाडे छे, तेम अहंकारथी अंध थएलो माणस पण दुर्वचन रूपी धूलने उडाडे छे जेम मदोन्मत्त हस्ती अंकुशने गणतो नथी, तेम अहंकारथी अंध थएलो माणस पण आगमरूपी अंकुशने गणतो नथी वली मदोन्मत्त हस्ती जेम सारा मार्गने तोडी नाखीने पोतानी मरजी प्रमाणे पृथ्वी उपर भमे छे, तेम अहंकारथी अंध थएलो माणस पण विनयरूपी न्यायमार्गने तोडी नाखीने पोतानी मरजी प्रमाणे पृथ्वी उपर भमे छे एवो ते अहंकारथी अंध थएलो माणस कया अनर्थने नथी उत्पन्न करतो? अर्थात् सर्व अनर्थने उत्पन्न करे छे (५०)

(शार्दूलविक्रीडितवृत्तम्)

औचित्याचरणं विलुंपति पयोवाहं नभस्वानिव,
प्रध्वंसं विनयं नयत्यहिरिव प्राणस्पृशां जीवितम् ॥
कीर्तिं कैरविणीं मतंगज इव प्रोन्मूलयत्यंजसा,
मानो नीच इवोपकारनिकरं हंति त्रिवर्गं नृणाम् ॥ ५१ ॥

औचित्येति ॥ पुनराह ॥ मानोऽहंकारो नृणां पुंसां त्रिवर्गं धर्मार्थकामरूपं हंति नाशयति । कः कमिव? नीचः मनुष्य उपकारनिकरमिव यथा नीचः उपकारसमूहं हंति तथा। पुनर्मानः औचित्याचरणं योग्याचारं विलुंपति स्फेटयति। कः कमिव? नभस्वान् वायुः पयोवाहमिव। पुनर्मानः प्राणस्पृशां प्राणिनां विनयं अभ्युत्थानादिकं प्रध्वंसं क्षयं नयति । कः कमिव? अहिः सर्पः जीवितमिव यथा सर्पो जीवितं क्षयं नयति । पुनरंजसा वेगेन कीर्तिं यशः प्रोन्मूलयति । कः कामिव? मतंगजो हस्ती कैरविणीं कमलिनीं यथा प्रोन्मूलयति ॥ ५१ ॥

अहंकार वायुनी पेठे मेघरूपी योग्य आचरणनो लोप करे छे; सर्पनी पेठे मनुष्यना जीवितरूप विनयनो नाश करे छे; मदोन्मत्त हस्तीनी पेठे कमलिनी रूपी कीर्तिनुं उन्मूलन करे छे; अने नीच पुरुष जेम उपकारना समूहने हणे छे, तेम मनुष्योना धर्म-अर्थ-काम-रूपी त्रणे वर्गनो नाश करे छे. (५१)

(वसंततिलकावृत्तम्)

मुष्णाति यः कृतसमस्तसमीहितार्थ–
संजीवनं विनयजीवितमंगभाजाम् ॥
जात्यादिमानविपजं विषमं विकारं,
तं मार्दवामृतरसेन नयस्व शांतिम् ॥ ५२ ॥

भूयश्चाह ॥ मुष्णातीति ॥ यो मानोऽगभाजां प्राणिनां विनयजीवितं विनयगुणरूपं जीवितं मुष्णाति उच्छिनत्ति । कथंभूतं विनयजीवितं । कृतसमस्तसमीहितार्थसंजीवनं कृतं समस्तानां समीहितार्थानां वांछितार्थानां संजीवनं येन तत् । तं जात्यादिमानविपजं जातिलाभकुलैश्वर्यबलरूपतपःश्रुतानां मानोऽहंकारः स एव विषं तस्मात्समुद्भवं उत्पन्नं विषमं घोरं विकारं मार्दवामृतरसेन मृदुता सुधारसेन शांतिं उपशमं नयस्व प्रापय ॥ मानत्यागे बाहुबलिनंदीपेणदृष्टांतः ॥ ५२ ॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्तिभिः ॥ सूरिभिर्विहितायां तु, मानस्य प्रक्रमोऽजनि ॥ ११ ॥

जे, समस्त वांछितार्थने सजीवन करनार एवा मनुष्योना, विनयरूपी जीवितनुं उच्छेदन करे छे, एवा जाति-कुळ प्रमुखनां मान-रूपी विषथी उत्पन्न थता विषम विकारने, कोमलता रूपी अमृत-रसथी शांति पमाडो. (५२)

हवे माया त्यागवानो उपदेश कहे छे
(मालिनीवृत्तम्)

कुशलजननवंध्यां सत्यसूर्यास्तसंध्यां,
कुगतियुवतिमालां मोहमातंगशालाम् ॥
शमकमलहिमानीं दुर्यशोराजधानीं,
व्यसनशतसहायां दूरतो मुंच मायाम् ॥ ५३ ॥

अथ मायात्यागमाह ॥ कुशलेति ॥ भो भव्यजन ! मायां कपटं दूरतो मुंच त्यज । किंभूतां मायां । कुशलस्य क्षेमस्य जनने उत्पादने वंध्यां वंध्यास्त्रीरूपां । पुनः सत्यमेव सूर्यस्तस्यास्तमनाय संध्यां तां । पुनः किंभूतां । कुगतिरेव युवतिस्तस्या वरमाला तां । पुनः किंभूतां । मोह एव मातंगस्तस्य शाला बंधनस्थानं तां । पुनः किंभूतां । शम एव उपशम एव कमलानि तेषां हिमानी हिमसंहतिः तां । पुनः किंभूतां । दुर्यशस अपकीर्तेः राजधानी निवासनगरी तां । पुनः किंभूतां । व्यसनानां कष्टानां शतानि तेषां सहायो यस्याः सा तां । ईदृशीं मायां दूरतो मुंच ॥५३

क्षेम(कुशल)ने उत्पन्न करवामां वंध्या स्त्री समान, सत्यवचनरूपी सूर्यने अस्त थवाने संध्या समान, कुगतिरूपी युवतीनी वरमाला समान, मोहरूपी हस्तिनी शाला समान, उपशमरूपी कमलपुष्पने हिम समान, अपयशनी राजधानी, अने सेंकडोगमे दुःखोनी सहायकारी एवी जे माया, तेनो दूरथीज त्याग करो (५३)

(उपेंद्रवज्रावृत्त)

विधाय मायां विविधैरुपायैः, परस्य ये वंचनमाचरंति ॥
ते वंचयंति त्रिदिवापवर्गसुखान्महामोहसखाः स्वमेव ॥५४॥

पुनराह ॥ विधायेति ॥ ये जनाः विविधैर्नानाप्रकारैरुपायैर्मायां कपट

विधाय कृत्वा परस्यान्यजनस्य वचनं आचरंति कुर्व्वंति ते जनाः महामोहसखाः महदज्ञानयुक्ताः संतः त्रिदिवापवर्गसुखात् देवलोकमोक्षसुखात् स्वमेवात्मानमेव वंचयंति विप्रतारयंति ॥ ९४ ॥

जेओ विविध प्रकारना उपायोथी माया रचीने परजनने छेतरे छे, तेओ महा अज्ञान युक्त छता, पोतेज स्वर्ग अने मोक्षना सुखथी पोताना आत्माने छेतरे छे. (५४)

(इंद्रवंशावृत्तम्.)

मायामविश्वासविलासमंदिरं,
दुराशयो यः कुरुते धनाशया ॥
सोऽनर्थसार्थं न पतंतमीक्षते,
यथा बिडालो लगुडं पयः पिबन् ॥ ९९ ॥

पुनर्मायादोपमाह ॥ यो दुराशयो दुष्टचित्तो जनो धनाशया द्रव्यस्य वांछया लोभेन मायां कपटं कुरुते विदधाति । स जनः आत्मनोऽनर्थसार्थं कष्टानां समूहं पतंतं आगच्छंतं नेक्षते नालोकते । कथमिव । यथा बिडालो मार्जारः पयो दुग्धं पिबन् सन् लगुडं दंडप्रहारं नेक्षते नालोकते । कथंभूतां मायां । अविश्वासस्य अप्रतीतेः क्रीडागृहं । मंदिरशब्दस्याजहल्लिंगत्वम् ॥ ९९ ॥

जे दुष्ट आशयवाळो माणस द्रव्यनी आशाथी, अविश्वासने रमवाना घर रूप एवी माया(कपट)ने रचे छे, ते बिलाडी जेम दूध पीती छती दंडनो प्रहार (थशे एम) जाणती नथी, तेम कष्टनो समूह आवी पडशे एम जाणतो नथी. (५५)

(वसंततिलकावृत्तम्.)

मुग्धप्रतारणपरायणमुज्जिहीते,
यत्पाटवं कपटलंपटचित्तवृत्तेः ॥

जीर्यत्युपप्लवमवश्यमिहाप्यकृत्वा,
नापथ्यभोजनमिवामयमायतौ तत् ॥ ५६ ॥

पुनराह ॥ मुग्धप्रतारणेति ॥ कपटे मायाया लपटा वाच्छायुक्ता चित्तवृत्तिर्मनोव्यापारो यस्य तस्य पुरुषस्य यत्पाटव चातुर्य उज्जिहीते उल्लासति । तत्पाटव अवश्य निश्चयेन आयतौ आगामिनि काले उपप्लव उपद्रव अकृत्वा अविधाय न जीर्यति परिणाम न याति । किं कुत ? तस्य विपाको भवत्येव । किमिव ? अपथ्यभोजन आमयमिव । यथा अपथ्य भोजन जेमन आमय रोग अकृत्वा आयतो न जीर्यति । कथभूत पाटव । मुग्धाना मूर्खाना प्रतारणे वचने परायण तत्पर । अत्र मल्लीनाथजीव-महाबलदृष्टात ॥ ५६ ॥ इति ॥ सिंदूरप्रकराख्यस्य, व्याख्याया हर्षकीर्तिभि ॥ सूरिभिर्निर्मिताया तु, मायाया प्रक्रमोऽजनि ॥ १२ ॥

जेम अपथ्य भोजन रोग कर्या विना परिणमतु नथी, तेम कपटने विषे लपट चित्तवृत्तिवाला मनुष्यनु, मूर्ख जनने छेतरवामा तत्पर एवु जे चातुर्य प्रकट थाय छे, ते भविष्यमा उपद्रव कर्या विना परिणाम पामतु नथी (५६)

हवे लोभ त्यागनो उपदेश कहे छे

(शार्दूलविक्रीडितवृत्तम्)

यद्दुर्गामटवीमटति विकट क्रामति देशातर,
गाहते गहन समुद्रमतनुक्लेशा कृषि कुर्वते ॥
सेवते कृपण पति गजघटासघट्टदुःसचर,
सर्प्पति प्रधन धनाधितधियस्तल्लोभविस्फूर्जितम् ॥५७॥

अथ लोभत्यागोपदेशमाह । यद्दुर्गामिति ॥ धनेन वित्तेनाधिता अधप्राय कृता धीर्बुद्धिर्यषा ते ईदृशा पुरुषा यत् दुर्गा विषमा अटवीं अरण्य

अटंति क्रामंति। पुनर्यत् विकटं विस्तीर्णं देशांतरं क्रामंति भ्रमंति । पुनर्यत् गहनं दुरवगाहं गाहंते उल्लंघयंति । पुनर्यत् अतनुक्लेशां बहुकष्टसाध्यां कृपिं कर्षणं क्षेत्रादि कुर्व्वंते विदधते । पुनर्यत् कृपणं अदातारं पतिं स्वामिनं सेवंते । पुनर्यत् गजघटानां हस्तिसमूहानां संघेन दुःसंचरं गंतुमशक्यं प्रधनं युद्धं प्रति सर्पंति गच्छंति । तत् सर्व्वं लोभस्य विस्फूर्जितं लोभस्य चेष्टितं जानीहि । लोभवशादेतानि वस्तूनि कुर्व्वंति । अतःकारणाल्लोभः संत्याज्य एव ॥ ५७ ॥

धनथी अंध थइ छे बुद्धि जेनी एवा पुरुषो जे विषम अटवीने विषे भ्रमण करे छे, विकट परदेशने विषे फरे छे, गहन एवा समुद्रनुं उल्लंघन करे छे, बहु दुःखवाली खेती करे छे, कृपण पतिनी सेवा करे छे, अने हस्तिओना समूहना संघट्ट( पासे पासे रहेवा )थी अंदर प्रवेश न थई शके एवा संग्रामने विषे पण जाय छे, ए सर्व लोभनुं चेष्टित छे. (५७)

मूलं मोहविषद्रुमस्य सुकृतांभोराशिकुंभोद्भवः,
क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः ॥
क्रीडासद्मकलेर्विवेकशशिनः स्वर्भानुरापन्नदी-
सिंधुः कीर्तिलताकलापकलभो लोभः पराभूयताम् ॥ ५८

पुनराह ॥ मूलमिति ॥ भो भव्याः! लोभः पराभूयतां निराक्रियतां त्यज्यतां । मोह एव अज्ञानमेव विषद्रुमो विषतरुः तस्य मूलं जटारूपं । मूलशब्दस्याजहल्लिंगत्वम् । पुनः कथंभूतो लोभः । सुकृतमेव पुण्यमेवांभोराशिः समुद्रस्तस्य शोषणे कुंभोद्भवोऽगस्तिरिव । पुनः क्रोधाग्नेः अरणिः क्रोध एव अग्निस्तस्य अरणिः काष्ठं उत्पत्तिस्थानं। पुनः प्रताप एव तरणिः सूर्यस्तस्याच्छादने तोयदो मेघोऽभ्रं । पुनः कलेः कलहस्य क्रीडासद्म लीलागृहं । पुनर्विवेक एव पुण्यापुण्यविचार एव शशी चंद्रस्तस्य स्वर्भानुः

राहु । पुन आपन्नदीसिंधु आपद कष्टान्येव नद्यस्तासा सिंधु समुद्रस्तासा स्थानरूपत्वात् । पुन किंभूतो लोभ । कीर्त्तिरेव लता वल्ली तस्या कलाप समूहस्तस्य विनाशे कलभो हस्तिशाव । ईदृशो लोभो जीर्यताम् ९८

**अज्ञानरूपी विषवृक्षनु मूल, सुकृत्यरूपी समुद्रने (शोषण करवाने) अगस्त्यऋषि समान, क्रोधरूपी अग्निने (सलगाववाने) अरणिना काष्ठ समान, प्रतापरूपी सूर्यने ढाकवामा मेघ समान, क्लेशनु क्रीडागृह, विवेकरूपी चद्रमाने (गली जवाने) राहु समान, आपत्तिरूपी नदीओना समुद्र समान, अने कीर्तिरूपी लताना समूहनो नाश करवामा हस्ती समान एवो जे लोभ, तेनो पराभव करो**

( वसततिलकावृत्तम् )

**निःशेषधर्मवनदाहविजृंभमाणे,**
**दु'खौघभस्मनि विसर्पदकीर्त्तिधूमे ॥**
**बाढ धनेंधनसमागमदीप्यमाने,**
**लोभानले शलभता लभते गुणौघः ॥ ९९ ॥**

पुनराह ॥ निःशेषेति ॥ लोभ एवानलोऽग्निस्तस्मिन् लोभानले गुणौघो ज्ञानादिगुणाना ओघ समूह शलभता पतगत्व लभते पतगवज्ज्वलतीति। कथभूते लोभानले। नि शेष समस्त यद्धर्म एव वन तस्य दाहेन विजृंभमाण विस्तार प्राप्नुवन् तस्मिन् । पुन कथभूते । दु खाना ओघ समूह एव भस्म रक्षा यत्र स तस्मिन् । पुन कथभूते । विसर्पत् प्रसरत् अपकीर्त्तिरेव धूमो यस्मात् स तस्मिन् । पुन कथभूते । बाढ अतिशयेन धनान्येव द्रव्याण्येव इधनानि एधासि तेषा समागमेन आगमनेन दीप्यमानोऽत्यत प्रज्वलत् वृद्धि प्राप्नुवत् तस्मिन् सर्वे गुणा पतगवत् भवन्ति ९९

**समस्त धर्मरूपी वनने बालवाथी विस्तार पामता, दु खोना समूहरूपी भस्मवाला, प्रसरता अकीर्तिरूपी धूमाडावाला, अने धन-**

रूपी इंधनना समागमथी अत्यंत जाज्वल्यमान एवा लोभरूपी अ-ग्निने विषे, (सर्व) सद्गुणोनो समूह पतंगपणाने प्राप्त थाय छे (अ-र्थात् एवा लोभरूप अग्निमां पडीने सद्गुणोनो समूह बली जाय छे).

हवे संतोषना गुणो कहे छे.

(शार्दूलविक्रीडितवृत्तम्.)

जातः कल्पतरुः पुरः सुरगवी तेषां प्रविष्टा गृहं,
चिंतारत्नमुपस्थितं करतले प्राप्तो निधिः संनिधिम् ॥
विश्वं वश्यमवश्यमेव सुलभाःस्वर्गापवर्गश्रियो,
ये संतोषमशेषदोषदहनध्वंसांबुदं बिभ्रते ॥ ६० ॥

संतोषेण लोभो निवार्यः स्यादतः संतोषगुणानाह ॥ जात इति ॥ ये जनाः संतोषं तृष्णानिरोधं बिभ्रते धारयंति । तेषां पुरोऽग्रे कल्पतरुः कल्पवृक्षो जातः प्रत्यक्षोऽभूत् । पुनस्तेषां गृहं सुरगवी कामधेनुः प्रविष्टा आगता । पुनस्तेषां करतले चिंतामणिरत्नं उपस्थितं आगतं । पुनस्तेषां निधिः द्रव्यस्य निधिः सन्निधिं समीपं प्राप्तः । पुनः विश्वं जगत् अवश्यं निश्चितं तेषां वश्यं जातं । पुनस्तेषां स्वर्गापवर्गश्रियः देवलोकमोक्षसंपदः सुलभाः सुप्राप्याः स्युः । कथंभूतं संतोषं । अशेषदोषदहनध्वंसांबुदम-शेषाश्च ते दोषाश्च अशेषदोषाः त एव दहनः अशेषदोषदहनस्तस्य ध्वंसाय अंबुदं । अतः संतोष एव कर्त्तव्यः । अत्र सुभूमचक्रवर्तिसागरश्रेष्ठि-कथा ॥ ६० ॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्त्तिभिः ॥ सूरिभिर्वि-हितायां तु, लोभस्य प्रक्रमोऽजनि ॥ इति त्रयोदशो लोभप्रस्तावः ॥१३॥

समस्त दोषरूपी अग्निने शमाववामां मेघ समान एवो जे संतोष, तेने जे पुरुषो धारण करे छे, तेमनी आगल कल्पवृक्ष उत्पन्न थयुं छे, तेमना घरने विषे कामधेनुए प्रवेश कर्यो छे, तेमना हस्ततलने

विषे चिंतामणिरत्न प्राप्त थयु छे, तेमने निधान मल्यो छे, तेमने सर्व जगत् वश्य थयु छे, तेमज तेमने स्वर्ग अने मोक्षनी लक्ष्मी अवश्य सुलभ छे (एम समजवु) (६०)

हवे सौजन्यता राखवानो उपदेश कहे छे

(शिखरिणीवृत्तम्)

वर क्षिप्तः पाणिः कुपितफणिनो वक्त्रकुहरे,
वर झपापातो ज्वलदनलकुडे विरचितः ॥
वर प्रासप्रातः सपदि जठरातर्विनिहितो,
न जन्य दौर्जन्य तदपि विपदा सद्म विदुषा ॥६१॥

अथ सौजन्यविधानोपदेशमाह ॥ वरमिति ॥ कुपितस्य फणिन क्रुद्धस्य सर्पस्य वक्त्रकुहरे मुखविवरे पाणिर्हस्त क्षिप्तो निक्षिप्त सन् वर श्रेयान् । पुनर्ज्वलदनलकुडे प्रज्वलदग्निकुडे झपापातो विरचित कृतो वर श्रेष्ठ । पुन प्रासस्य कुतस्य प्रातो अग्र जठरात उदरमध्ये सपदि शीघ्र क्षिप्तो वर श्रेष्ठ । तदपि विदुषा पडितेन दौर्जन्य पैशून्य न जन्य न कर्त्तव्यमेव । किभूत दौर्जन्य । विपदा आपदा कष्टाना सद्म गृह स्थानमित्यर्थ । अत कारणात् सौजन्यमेव विधेयम् ॥ ६१ ॥

कोपायमान थएला सर्पना मुखने विषे हाथ नाखवो ते सारो; आज्वल्यमान अग्निना कुडने विषे झपापात करवो ते सारो, उदरना मध्यभागने विषे भालानो अग्रभाग नाखवो ते सारो; पण पडित पुरुषे आपत्तिनु स्थानक एवु जे दुर्जनपणु करवु ते सारू नहीं

(वसततिलकावृत्तम्)

सौजन्यमेव विदधाति यशश्चय च,
स्वश्रेयस च विभव च भवक्षय च ॥

**दौर्जन्यमावहसि यत् कुमते तदर्थं,**
**धान्येऽनलं दिशसि तज्जलसेकसाध्ये ॥ ६२ ॥**

पुनराह । सौजन्यमेव सुजनतैव पुंसां यशश्चयं कीर्त्तिसमूहं विदधाति करोति । पुनः स्वश्रेयसं स्वकल्याणं विदधाति । पुनर्विभवं द्रव्यं विदधाति । पुनर्भवक्षयं संसारक्षयं मोक्षं विदधाति। ततो हे कुमते! हे कुबुद्धे! यत् तदर्थं यशश्चयाद्यर्थं दौर्जन्यं पिशुनतां आवहसि धरसि । तत् धान्ये धान्यक्षेत्रेऽनलं अग्निं दिशसि ददासि । कथंभूते धान्ये । जलसेकसाध्ये जलस्य सेकेन सिंचनेन साध्ये निष्पादनीये । तत्र दवं ददासि ॥ ६२ ॥

**सुजनताज पुरुषोना यशना समूहने धारण करे छे, तेमनुं श्रेय करे छे, वैभव करे छे अने संसारनो क्षय करे छे. तो, हे दुर्बुद्धि! तुं ते ते कारणो (यश, वैभव अने संसारनो क्षय करवा)ने अर्थे दुर्जनता धारण करे छे, ते तो तुं जलसिंचनथी मेलववा योग्य एवा धान्यना क्षेत्रने विषे अग्नि मूके छे. (६२)**

(पृथ्वीवृत्तम्.)

**वरं विभववंध्यता सुजनभावभाजां नृणा-**
**मसाधुचरितार्जिता न पुनरूर्ज्जिताः संपदः ॥**
**कृशत्वमपि शोभते सहजमायतौ सुंदरं,**
**विपाकविरसा न तु श्वयथुसंभवा स्थूलता ॥ ६३ ॥**

दारिद्र्येऽपि सुजनतैव श्रेष्ठेत्याह ॥ वरमिति ॥ सुजनभावभाजां सौजन्यसहितानां.अत्र स्वजनभावभाजामपि पाठोऽस्ति, नृणां पुंसां विभवस्य वंध्यता निष्फलता निर्द्रव्यता दारिद्र्यमेव वरं श्रेष्ठं । परंतु असाधुचरितेनाऽर्ज्जिता दौर्जन्येन उपार्ज्जिताः संपदः श्रियोऽपि वरं न श्रेष्ठा न श्लाघ्याः । कथंभूताः संपदः । ऊर्ज्जिता बलिष्ठाः प्रचुराः । तत्र

दृष्टांतमाह । सहज स्वाभाविक कृशत्व दौर्बल्यमपि शोभते । कथभूत कृशत्व । आयतौ उत्तरकाले आगामिकाले सुदर शोभन । तु पुन श्वयथुसभवा शोफाज्जाता स्थूलता पीनताऽपि न वर न श्रेष्ठा । कथ भूता स्थूलता । विपाके परिणामे अत्ये विरसा दारुणा ॥ ६३ ॥

सुजनतावाला मनुष्योने वैभव रहितपणु अर्थात् दारिद्य एज सारू छे, पण दुष्ट आचरणवडे उपार्जेली सपत्ति सारी नथी, कारण के, आगामि कालने विषे सुदर एवु जे स्वाभाविक दुर्बल-पणु ते शोभे छे, पण परिणामे दारुण एवी जे सोजाथी थएली पुष्टता ते शोभती नथी (६३)

( शार्दूलविक्रीडितवृत्तम् )

न ब्रूते परदूषण परगुण वक्त्यल्पमप्यन्वह,
सतोष वहते परर्द्धिषु परावाधासु धत्ते शुचम् ॥
स्वश्लाघा न करोति नोज्झति नय नौचित्यमुल्लघय-
त्युक्तोप्यप्रियमक्षमा न रचयत्येतच्चरित्र सताम्॥६४॥

सौजन्यभाजा गुणानाह ॥ न ब्रूत इति ॥ सता साधूना सज्जनाना एतच्चरित्र चेष्टित अस्ति । एतदिति किं ? सज्जन परदूषण परदोष न ब्रूते । पुनरल्पमपि तुच्छमपि परगुण अन्यगुण अन्वह निरतर वक्ति कथ-यति । पुन परेषा ऋद्धिषु सपत्सु सतोष अनभिलाष अमत्सर वहते ध-त्ते । पुन पराबाधासु परपीडासु शुच शोक धत्ते । पुन स्वश्लाघा आत्म-प्रशसा न करोति । पुनर्नय न्याय नोज्झति न त्यजति । पुनरौचित्य योग्यता नोल्लघयति नातिक्रामति । पुनरप्रिय विरूप अहित उक्तोऽपि भाषितोपि अक्षमा क्रोध न रचयति । सता एतच्चरित्र वर्त्तते ॥ ६४ ॥ सिंदूरप्रकरग्रथ व्याख्याया हर्षकीर्त्तिभि ॥ सूरिभिर्विहिताया तु, सौजन्य प्रक्रमोऽजनि ॥ १४ ॥

(सज्जन पुरुषो) पारका दोषने कहेता नथी; परंतु पारका गुणने, ते अल्प होय तो पण निरंतर कहे छे; पारकी संपत्तिने विषे (पारकी संपत्तिने जोईने) संतोष, अने परपीडाने विषे (परपीडाने जोईने) शोक धारण करे छे; आत्मप्रशंसा करता नथी; न्यायनो त्याग करता नथी अने योग्यतानुं उल्लंघन करता नथी; वली तेमने अप्रिय वचन कह्यां होय तो पण तेओ क्रोध करता नथी; आवुं सत्पुरुषोनुं चरित्र छे. (६४)

हवे गुणीजनना संगनुं वर्णन करे छे.

**धर्मं ध्वस्तदयो यशश्च्युतनयो वित्तं प्रमत्तः पुमान्,**
**काव्यं निष्प्रतिभस्तपः शमदयाशून्योऽल्पमेधाः श्रुतम् ॥**
**वस्त्वालोकमलोचनश्चलमना ध्यानं च वांछत्यसौ,**
**यः संगं गुणिनां विमुच्य विमतिः कल्याणमाकांक्षति ६५**

अथ गुणिसंगं वर्णयति ॥ धर्म्ममिति ॥ यो विमतिः निर्बुद्धिर्गुणिनां गुणवतां मनुष्याणां संगं संसर्गं विमुच्य त्यक्त्वा कल्याणं श्रेय आकांक्षति । असौ विमतिः पुमान् ध्वस्तदयो गतकृपः निर्दयः सन् धर्म्मं पुण्यं वांछति । पुनश्च्युतनयो गतन्यायः अन्यायभाक् सन् यशः कीर्तिं वांछति । पुनः प्रमत्तः प्रमादी सन् वित्तं धनं वांछति । पुनर्निष्प्रज्ञः प्रज्ञा रहितः सन् काव्यं कर्तुं वांछति । पुनः शमेन उपशमेन दयया च हीनो रहितः पुमान् तपो वांछति । पुनरल्पमेधास्तुच्छबुद्धिर्बुद्धिरहितः सन् श्रुतं शास्त्रं पठितुं वांछति । पुनरलोचनो नेत्ररहितः सन् वस्तूनां घटपटादीनां विलोकनं दर्शनं वांछति । पुनश्चलमनाः चलचित्तः सन् ध्यानं वांछति । तथा गुणवतां संगं विना कल्याणं न ॥ ६५ ॥

जे बुद्धिहीन पुरुष गुणी जननो संग त्यजी दईने कल्याणनी इच्छा राखे छे; ते, दयानो त्याग करीने धर्मनी इच्छा करे छे

(एम समजवु), न्यायनो त्याग करीने यशनी, प्रमादी थईने द्रव्यनी, बुद्धि विना काव्य करवानी, शमता अने दया विना तपनी, अल्पमतिवालो छता शास्त्रना अध्ययननी, नेत्र विना वस्तुओने जोवानी, अने चचल चित्तवालो छता ध्याननी इच्छा करे छे (एम समजवु) (६५)

( हरिणीवृत्तम् )

हरति कुमतिं भित्ते मोह करोति विवेकिता,
वितरति रति सूते नीतिं तनोति गुणावलिम् ॥
प्रथयति यशो धत्ते धर्म्म व्यपोहति दुर्गतिं,
जनयति नृणा किं नाभीष्ट गुणोत्तमसंगमः ॥ ६६ ॥

पुनर्गुणिसग वर्णयति ॥ हरतीति ॥ नृणा पुसा गुणै उत्तमा गुणोत्तमास्तेषा सगमो नृणा किं किं अभीष्ट वाछित न जनयति न करोति² अपि तु सर्व्वमभीष्ट जनयति । गुणोत्तमसगम कुमतिं कुबुद्धिं हरति दूरीकरोति । पुनर्मोह अज्ञान भित्ते विदारयति । पुनर्विवेकिता तत्त्वातत्त्वविज्ञत्व करोति । रतिं सतोष वितरति ददाति । पुनर्नीतिं न्याय सूते जनयति । पुनर्गुणावलिं गुणश्रेणीं तनोति । पाठातरे तु 'तनोति विनीतता' विनीतत्व तनोति । पुनर्यश कीर्तिं प्रथयति विस्तारयति । पुनर्धर्म्मं धत्ते धरति । पुनर्दुर्गतिं नरकतिर्यग्गतिरूपा व्यपोहति विस्फोटयति । एव गुणोत्तमसगम सर्व्वमभीष्ट जनयति ॥ ६६ ॥

गुणोवडे उत्तम थवा जनोनो सगम शु शु इच्छितने नथी उत्पन्न करतो? (ते सगम) कुमतिने हरे छे, मोहने भेदे छे, तत्व अने अतत्वनु भान करावे छे, सतोष आपे छे, नीतिने प्रसवे छे, गुण समूहने विस्तारे छे, यशने फेलावे छे, धर्मने धारण करे छे अने दुर्गतिने दूर करे छे (६६)

( शार्दूलविक्रीडितवृत्तम् )

लब्धुं बुद्धिकलापमापदमपाकर्तुं विहर्तुं पथि,
प्राप्तुं कीर्तिमसाधुतां विधुवितुं धर्मं समासेवितुम् ॥
रोद्धुं पापविपाकमाकलयितुं स्वर्गापवर्गश्रियं,
चेत्त्वं चित्त समीहसे गुणवतां संगं तदंगीकुरु ॥६७॥

पुनराह ॥ लब्धुं बुद्धीति ॥ रे चित्त! चेद्यदि त्वं बुद्धिकलापं बुद्धिसमूहं लब्धुं प्राप्तुं समीहसे वांछसि । तत्तदा गुणवतां गुणिनां संगं संसर्गं अंगीकुरु विधेहि । पुनर्यदि विपदं आपदं अपाकर्तुं दूरीकर्तुं समीहसे । पुनर्यदि पथि न्यायमार्गे विहर्तुं विचरितुं वांछसि । पुनः कीर्तिं प्राप्तुं वांछसि । पुनरसाधुतां असौजन्यं विधुवितुं स्फोटयितुं समीहसे । पुनर्यदि धर्मं पुण्यं समासेवितुं कर्तुं समीहसे । पुनर्यदि पापविपाकं अशुभकर्मफलं रोद्धुं समीहसे । पुनः स्वर्गापवर्गश्रियं देवलोकमोक्षलक्ष्मीं आकलयितुं अनुभवितुं समीहसे । तदा गुणवतां संगं कुरु ॥ ६७ ॥

हे चित्त! जो तुं बुद्धिना समूहने प्राप्त करवाने, आपत्तिने दूर करवाने, न्यायमार्गने विषे विचरवाने, कीर्ति संपादन करवाने, दुर्जनतानो त्याग करवाने, धर्मनुं उत्तम रीते सेवन करवाने, पापना फलने रोकवाने, अने स्वर्ग तथा मोक्षनी लक्ष्मीनो अनुभव करवाने इच्छतुं होय तो, गुणीजनना संगनो अंगीकार कर. (६७)

हवे निर्गुणना संगना दोषो कहे छे.

(हरिणीवृत्तम्)

हिमति महिमांभोजे चंडानिलत्युदयांबुदे,
द्विरदति दयारामे क्षेमक्षमाभृति वज्रति ॥
समिधति कुमत्यग्नौ कंदत्यनीतिलतासु यः,
किमभिलषता श्रेयः श्रेयः स निर्गुणसंगमः ॥ ६८ ॥

निर्गुणसंगमदोषमाह ॥ हिमतीति ॥ स निर्गुणसंगमः किमपि श्रेयः कल्याणं अभिलषता वांछता पुरुषेण किं श्रेयः किं आश्रयणीयः? नाश्रयणीयः । स कः? यो महिमा एव महत्त्वमेवांभोजं कमलं तस्मिन् हिमति हिममिवाचरति तद्विनाशकत्वात् । पुनर्यो निर्गुणसंगमः उदय एव धनधान्यप्रतापवृद्धिरेवांभोदो मेघस्तत्र चंडानिलति प्रचंडवायुरिवाचरति । पुनर्दया एव आरामो वनं अथवा दमाराम इति पाठे दम एव आरामो वनं तत्र द्विरदति द्विरदवद् गजवदाचरति तदुन्मूलकत्वात् । पुनर्यः क्षेममेव कुशलमेव क्ष्माभृत् गिरिस्तत्र वज्रति वज्रवदाचरति । तच्छेदकत्वात् । पुनर्यः कुमतिरेवाग्निस्तत्र समिधति । समित् इंधनं इवाचरति । तद्वृद्धिहेतुत्वात् । पुनर्यः अनीतिर्लतासु अन्यायवल्लिषु कंदति कंद इवाचरति । तन्मूलभूतत्वात् । ईदृशो निर्गुणसंगमः श्रेयोवांछता पुरुषेण न श्रेयः नाश्रयणीयः ॥ अत्र गिरिशुकपुष्पशुकयोः कथा ॥ यतः ॥ माताप्येका पिताप्येको, मम तस्य च पक्षिणः ॥ अहं मुनिभिरानीत, सच नीतो गवाशिभिः ॥ १ ॥ गवाशिनां तु स वचः शृणोति, अहं तु राजन् मुनिपुंगवानाम् । प्रत्यक्षमेतद्भवताऽपि दृष्टं, संसर्गजा दोषगुणा भवंति ॥ इति वचनात् ॥२॥६८॥ सिंदूरप्रकरग्रंथ व्याख्यायां हर्षकीर्त्तिभिः ॥ सूरिभिर्विहितायां तु, गुणिसंगमप्रक्रमः ॥ इति पंचदशो गुणिसंगमप्रक्रमः ॥ १५ ॥

जे (निर्गुणी जननो संगम) महिमारूपी कमलनी उपर हिम समान छे, उदयरूपी मेघने विषे प्रचंड वायु जेवो छे, दयारूपी उद्यानने विषे हस्ती तुल्य छे, कल्याणरूपी पर्वतने विषे वज्र जेवो छे, कुमतिरूपी अग्निने विषे लाकडां समान छे अने अन्यायरूपी लताने विषे कंद तुल्य छे, एवो जे निर्गुणी जननो संगम, ते शुं कल्याणनी इच्छावाला पुरुषोए आश्रय करवा योग्य छे? अर्थात् नथी

हवे इंद्रियो जीतवानो उपदेश कहे छे.

( शार्दूलविक्रीडितवृत्तम् )

आत्मानं कुपथेन निर्गमयितुं यः शूकलाश्वायते,
कृत्याकृत्यविवेकजीवितहृतौ यः कृष्णसर्पायते ॥
यः पुण्यद्रुमखंडखंडनविधौ स्फूर्जत्कुठारायते,
तं लुप्तव्रतमुद्रमिंद्रियगणं जित्वा शुभंयुर्भव ॥ ६९ ॥

अथेंद्रियजयोपदेशमाह ॥ आत्मानमिति ॥ हे साधो ! तं इंद्रियगणं पंचेंद्रियसमूहं जित्वा विनिर्जित्य शुभंयुः शुभसंयुक्तो भव । तं कं? यः इंद्रियगणः स्पर्शनरसनघ्राणचक्षुःश्रोत्रसमूहः आत्मानं स्वं कुपथेन कुमार्गेण निर्गमयितुं नेतुं शूकलाश्वायते दुर्विनीत अश्व इवाचरति। तस्य कुमार्गगामिस्वभावत्वात् । पुनर्यः इंद्रियगणः कृत्यं च अकृत्यं च कृत्याकृत्ये तयोर्विवेक एव विचार एव जीवितं जीवितव्यं तस्य हृतौ हरणे कृष्णसर्प्पायते कृष्णसर्प्प इवाचरति । पुनर्यः इंद्रियगणः पुण्यमेव द्रुमस्तेषां खंडं वनं तस्य खंडनविधौ छेदने स्फूर्जत्कुठारायते देदीप्यमान कुठार इवाचरति। कथंभूतं इंद्रियगणं । लुप्तव्रतमुद्रं लुप्ता छिन्ना व्रतानां मुद्रा मर्यादा येन सः तं ॥

हे साधु ! व्रतनी मर्यादाने छेदनारो एवो जे इंद्रियोनो समूह, ते आत्माने कुमार्गे लई जवाने हठीला अश्वनी पेठे आचरण करे छे, कृत्य अने अकृत्यना विवेकरूपी जीवितनुं हरण करवामां कृष्ण सर्प समान आचरण करे छे अने धर्मरूपी वृक्षना वनने खंडन करवामां स्फुर्जित कूहाडी समान आचरण करे छे, ते इंद्रियना समूहनो पराजय करीने कल्याण प्राप्त कर. ( ६९ )

( शिखरिणीवृत्तम् )

प्रतिष्ठां यन्निष्ठां नयति नयनिष्ठां विघटय-
त्यकृत्येष्वाधत्ते मतिमतपसि प्रेम तनुते ॥

विवेकस्योत्सेकं विदलयति दत्ते च विपदं,
पदं तद्दोषाणां करणनिकुरवं कुरु वशे ॥ ७० ॥

पुनराह ॥ प्रतिष्ठामिति ॥ भो भव्य ! तत्करणानां इंद्रियाणां निकुरवं समूहं वशे कुरु वश्यतां नय आत्मायत्तं निधेहि । तत्किं ? यत् करणनिकुरवं प्रतिष्ठां महत्त्वं निष्ठां अवसानं क्षयं नयति प्रापयति । पुनर्यत् नयनिष्ठां न्यायस्थितिं विघटयति स्फेटयति । पुनर्यत् अकृत्येषु अनाचारेषु मतिं बुद्धिं आधत्ते स्थापयति । पुनः अतपसि अविरतौ प्रेम तनुते स्नेहं कुरुते । पुनर्यत् विवेकस्य कृत्याऽकृत्यविचारस्य उत्सेकं उन्नतत्वं विदलयति विध्वंसयति । पुनर्यत् विपदं आपदं कष्टं दत्ते । तत् करणनिकुरवं इंद्रियसमूहं स्ववशे कुरु । कथंभूतं करणनिकुरवं । दोषाणां पदं स्थानं ॥

हे भव्यजीव! सर्व दोषोनुं स्थानक एवो जे इंद्रियोनो समूह, ते प्रतिष्ठानो नाश करे छे, न्यायनी निष्ठाने तोडी नाखे छे, अकार्योने विषे मति धारण करे छे, अविरतिने विषे स्नेह करे छे, विवेकना उन्नतपणानो विनाश करे छे अने विपत्तिने आपे छे, ते इंद्रियना समूहने पोताने स्वाधिन कर ( ७० )

( शार्दूलविक्रीडितवृत्तम् )

धत्तां मौनमगारमुज्झतु विधिप्रागल्भ्यमभ्यस्यता-
मस्त्वंतर्गणमागमश्रममुपादत्तां तपस्तप्यताम् ॥
श्रेयःपुंजनिकुंजभंजनमहावातं न चेदिंद्रिय-
व्रातं जेतुमवैति भस्मनि हुतं जानीत सर्वं ततः ॥ ७१ ॥

धत्तामिति ॥ हे साधो ! भवान् मौनं धत्तां कुरुतां । पुनः अगारं गृहं उज्झतु त्यजतु । पुनर्विधिप्रागल्भ्यं सर्वाचारचातुर्यं अभ्यस्यतां करोतु । अंतर्गणं गच्छवासमध्ये अथवा अंतर्वणमितिपाठे वनमध्ये अस्तु

भवतु । पुनरागमश्रमं सिद्धांतपठनं उपादत्तां अंगीकुरुतां । पुनस्तपस्तप्यतां करोतु । परंचेद्यदि इंद्रियव्रातं इंद्रियसमूहं जेतुं वशीकर्तुं नवैति न जानाति । तदा सर्व्वं पूर्वानुष्टानं भस्मनि रक्षायां हुतं वृथा जानीत । कथंभूतं इंद्रियव्रातं । श्रेयसां कल्याणानां पुंज एव निकुंजं तस्य भंजने महावातं वातूलममानं ॥ ७१ ॥

हे साधु! मौनव्रत धारण करो, घरनो त्याग करो, आचारना चातुर्यनो अभ्यास करो, वनने विषे गमन करो, सिद्धांतना पाठनो अंगीकार करो, तीव्र तपश्चर्या करो; (ए बधुं गमे एटलुं करो) पण ज्यांसुधी कल्याणना समूहरूप वनने भागवाने महावायु समान एवो जे इंद्रियोनो समूह, तेनो पराजय करवानुं जाण्युं नथी, त्यांसुधी ते सर्व ( मौनव्रन आदि ) भस्मने विषे होमेला जेवुं (वृथा) जाणो.

धर्मध्वंसधुरीणमभ्रमरसावारीणमापत्प्रथा–
लंकर्मीणमशर्मनिर्मितिकलापारीणमेकांततः ॥
सर्वान्नीनमनात्मनीनमनयात्यंतीनमिष्टे यथा,
कामीनं कुमताध्वनीनमजयन्नक्षौघमक्षेमभाक् ॥७२॥

पुनर्विशेषमाह ॥ धर्म्मध्वंसेति ॥ अक्षाणां इंद्रियाणां ओघं समूहं अजयन् अवशीकुर्व्वन् जनः अक्षेमभाक् अकल्याणभाग् भवति । कथंभूतं अक्षौघं । धर्मध्वंसे धुरीणः मुख्यस्तं । पुनरभ्रमरसस्य सत्यज्ञानस्य आवारीणं आवरणाय समर्थ आवारीणस्तं आच्छादकं । पुन. कथंभूतं । आपदां कष्टानां प्रथायां विस्तारणे अलंकर्म्मीणः समर्थस्तं । पुनः किंभूतं । अशर्मणां अकल्याणानां दुःखानां निर्मितौ निर्माणे करणे कलापारीणश्चतुरस्तं । पुनः किंभूतं । एकांततो निश्चयेन सर्व्वान्नीनः सर्व्वान्नभक्षकस्तं । पुनः किंभूतं । न आत्मने हितोऽनात्मनीनः तं आत्मनोऽहितं । पुनः किंभूतं । अनयेऽन्यायेऽत्यंतीनोऽत्यंतगामी तं । पुनः किंभूतं । इष्टे

इष्टवस्तुनि यथाकाम स्वेच्छया वर्त्तते इति यथाकामिनस्त। पुन किंभूत। कुमते कुत्सितमते अनुगनीन पाथस्त। ईदृश इंद्रियसमूह अजयन् सन् अक्षेमभाग् भवति ॥ ७२ ॥ यत ॥ कुरगमातगपतगभृग–मीना हता पचभिरेव पच ॥ एक प्रमादी स कथ न हन्यते, य सेवते पच-भिरेव पच ॥ १ ॥ इति ॥ सिंदूरप्रकरग्रथ–व्याख्याया हर्षकीर्त्तिभि ॥ सूरिभिर्विहिताया तु, इंद्रियप्रक्रमोऽजनि ॥ १६ ॥

धर्मनो नाश करवामा अग्रेसर, सत्य वातने आवरण करनार, आपत्तिने विस्तारवामा समर्थ, दु ख उत्पन्न करवाना कार्यमा पार पामेलो, एकात सर्व अन्न भक्षक, आत्माने अहितकारी, अन्याय मार्गमा चालनार, इच्छितने विषे स्वेच्छाए वर्तनारो, अने कुमत मार्गने विषे जनारो एवो जे इंद्रियोनो समूह छे, तेने नहि जीतनारो प्राणी कल्याणने भजनारो थतो नथी ( अर्थात् एवा मनुष्यनु श्रेय थतु नथी ) ( ७२ )

हवे लक्ष्मीनो स्वभाव कहे छे

निम्न गच्छति निम्नगेव नितरा निद्रेव विष्कभते,
चैतन्य मदिरेव पुष्यति मद धूम्येव दत्तेऽधताम् ॥
चापल्य चपलेव चुवति दवज्वालेव तृष्णा नय-
त्युल्लास कुलटागनेव कमला स्वैर परिभ्राम्यति ॥७३॥

पुनर्लक्ष्मीस्वभावमाह ॥ निम्न गच्छती ॥ कमला लक्ष्मी निम्न नीच प्रति गच्छति। केव? निम्नगा इव नदीव। यथा नदी नीच गच्छति। पुन नितरा अतिशयेन चैतन्य ज्ञान विष्कभते विनाशयति। केव? निद्रेव यथा निद्रा अचैतन्य करोति। पुनर्लक्ष्मीर्मद अहकार पुष्यति पुष्णाति। केव? मदिरेव सुरेव यथा मदिरा मद उन्मत्तता करोति। पुन कमला अधता दत्ते अधत्व करोति। केव? धूम्येव धूमसमूह इव।

यथा धूमोऽप्यंधत्वं करोति । पुनर्लक्ष्मीश्चापल्यं चुंबति भजति । केव ? चपला इव विद्युदिव । पुनः कमला तृष्णां उल्लासं नयति । लोभवाञ्छां वर्द्धयति । केव ? दवज्वाला इव । यथा दवज्वाला तृषां वर्द्धयति । पुनः कमला स्वैरं स्वेच्छया परिभ्रमति । केव ? कुलटांगना इव असती स्त्री इव यथा असती स्त्री स्वेच्छया भ्रमति तद्वत् ॥ ७३ ॥

लक्ष्मी, नदीनी पेठे नीच प्रत्ये जाय छे; निद्रानी पेठे चैतन्यनो विनाश करे छे; मदिरानी पेठे मदनुं पोषण करे छे; धूमाडाना समूहनी पेठे अंधपणुं आपे छे; विजलीनी पेठे अस्थिरपणाने भजे छे; दावाग्निनी पेठे तृष्णाने वधारे छे; अने कुलटा स्त्रीनी पेठे स्वेच्छाए भ्रमण करे छे. ( ७३ )

हवे धनना दोषो कहे छे.

**दायादाः स्पृहयंति तस्करगणा मुष्णंति भूमीभुजो,**
**गृह्णंति च्छलमाकलय्य हुतभुग्भस्मीकरोति क्षणात् ॥**
**अंभः प्लावयति क्षितौ विनिहितं यक्षा हरंते हठात्,**
**दुर्वृत्तास्तनया नयंति निधनं धिग्बह्वधीनं धनम् ॥ ७४ ॥**

धनस्य दोषानाह ॥ दायादेति ॥ धनं द्रव्यं धिक् अस्तु । धिक् निर्भर्त्सननिंदयोः । किंभूतं धनं । बह्वधीनं बहूनामधीनमतो बहवः इच्छंति । कथं ? दायादाः गोत्रिणः स्पृहयंति ग्रहीतुं वांछंति । पुनस्तस्करगणाश्चौरसमूहाः मुष्णंति चोरयंति । पुनर्भूमीभुजो राजानः छलं आकलय्य मिषं दत्वा गृह्णंति । हुतभुक् वह्निः क्षणाद्वेगेन भस्मीकरोति ज्वालयित्वा रक्षां करोति । पुनरंभः पानीयं प्लावयति वाहयति । पुनर्यद्धनं क्षितौ विनिहितं स्थापितं सत् यक्षा व्यंतरा हठाद्बलात्कारेण हरंते अपहरंति । पुनर्दुर्वृत्ताः दुराचारास्तनयाः पुत्रा निधनं विनाशं नयंति प्रापयंति । एवं बह्वधीनं धनं धिगस्तु ॥ ७४ ॥

जेनी दायादो (एक गोत्रमा जन्मेला) इच्छा करे छे, जेने चोर लोको चोरी जाय छे, राजाओ छल करीने लई ले छे, अग्नि क्षणमात्रमा भस्म करे छे, जल डुबावी दे छे, भूमिने विषे राख्यार्थी व्यंतरो बलात्कारे हरी जाय छे अने जेनो दुराचारी पुत्रो विनाश करे छे एम बहु बहु जणाने आधीन एवु जे धन तेने धिक्कार थाओ। (७४)

नीचस्याऽपि चिरं चटूनि रचयत्यायाति नीचैर्नतिं,
शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्त्तनम् ॥
निर्वेदं न विदंति किंचिदकृतज्ञस्यापि सेवाक्रमे,
कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वंति वित्तार्थिनः ॥७५॥

धने मोहोत्पादकत्वमाह ॥ नीचस्येति ॥ मनस्विनो मानवतो दक्षा अपि मनुष्या वित्तार्थिनो द्रव्यार्थिन सत किं कष्टं न कुर्वंति । अपि तु सर्वं कष्टं कुर्वंति । यथा नीचस्यापि नरस्याग्रे चिरं चिरकाल याचमानाश्चटूनि चटुवचनानि प्रियवचनानि रचयति जल्पति । पुनर्नीचैर्नरै सम नतिं आयाति प्रणामं कुर्वंति । पुन शत्रोरपि अगुणात्मनोपि निर्गुणस्यापि उच्चैरनिश्चयेन गुणोत्कीर्तनं गुणवर्णनं विदधति । पुनरकृतज्ञस्याऽपि प्रभो सेवाक्रमे सेवाकरणे किंचित् स्तोकमपि निर्वेदं खेदं न विदंति न जानंति । वित्तवाञ्छका सत ॥ ७५ ॥

मानवता मनुष्यो पण द्रव्यना अर्थी थईने, नीच पुरुषोनी आगल चिरकाल मिष्ट वचन बोले छे (खुशामत करे छे), नीच पुरुषोने नमस्कार करे छे, निर्गुणी शत्रु पण उंचे स्वरे गुण वर्णन करे छे; अने करेला गुणने नहि जाणनारा स्वामीनी सेवा करवामा पण कांई दुःख धरता नथी, आम तेओ शु शु कष्ट नथी करता? (७५)

लक्ष्मीः सर्पति नीचमर्णवपयःसंगादिवांभोजिनी-
संसर्गादिव कंटकाकुलपदा न क्वापि धत्ते पदम् ॥
चैतन्यं विषसन्निधेरिव नृणामुज्झासयत्यंजसा,
धर्मस्थाननियोजनेन गुणिभिर्ग्राह्यं तदस्याः फलम्॥७६॥

उपमानेन श्रीस्वरूपमाह ॥ लक्ष्मीः नीचं सर्पति नीचं जनं प्रति याति । कस्मात्? उत्प्रेक्षते । अर्णवपयःसंगात् समुद्रजलसंगमान्नीचगामिन्यभूत् । पुनर्लक्ष्मीः क्वापि पदं स्थानं न धत्ते न स्थापयति । कीदृशी । अंभोजिनीसंसर्गात् कमलिनीसंयोगादिव । कंटकाकुलपदा कंटकैर्व्याप्तचरणेव ॥ पुनर्लक्ष्मीर्नृणां पुंसां चैतन्यं ज्ञानं अंजसा वेगेनोज्झासयति गमयति । कस्मात् विषसन्निधेर्विषसामीप्यादिव लक्ष्म्याः विषस्य च समुद्रस्थानत्वात् तस्मात्कारणात् गुणिभिर्जनैर्धर्मस्थाननियोजनेन धर्मस्थानव्ययकरणेनास्याः लक्ष्म्याः फलं ग्राह्यं सफला कर्त्तव्येत्यर्थः ॥ ७६ ॥ सिंदूरप्रकरग्रंथ—व्याख्यायां हर्षकीर्त्तिभिः ॥ सूरिभिर्विहितायां तु, लक्ष्म्याश्च प्रक्रमोऽजनि ॥ १७ ॥

लक्ष्मी, समुद्रना जलना संसर्गथीज होयनी ! तेम नीच प्रत्ये जाय छे; कमलिनीना संसर्गथी पगमां कांटो वाग्यो होयनी ! तेम कोई स्थले पग मूकती नथी; अने विषनी साथे एकज स्थानमां रहेवाथीज होयनी ! तेम मनुष्योना चैतन्यनो एकदम नाश करे छे; माटे गुणिजनोए तेने (लक्ष्मीने) धर्मने विषे जोडीने (धर्मकार्यमां खरचीने) तेनुं फल ग्रहण करवुं. (७६)

हवे दाननो उपदेश कहे छे.

चारित्रं चिनुते धिनोति विनयं ज्ञानं नयत्युन्नतिं,
पुष्णाति प्रशमं तपः प्रबलयत्युल्लासयत्यागमम् ॥

**पुण्य कंदलयत्यघ दलयति स्वर्ग ददाति क्रमात्,**
**निर्वाणश्रियमातनोति निहित पात्रे पवित्र धनम् ॥७७॥**

दानोपदेशमाह ॥ चारित्रमिति ॥ पवित्र न्यायोपार्जित धन वित्त पात्रे सुपात्रे निहित दत्त सत् चारित्र सयम चिनुते वर्द्धयति । विनय विनयगुण धिनोति प्रीणयति । पुनर्ज्ञान श्रुतादि उन्नतिं नयति प्रापयति । पुन प्रशम उपशम पुष्णाति पोषयति । पुनस्तपो मासक्षपणादि प्रबलयति पारणादियोगादुत्साहयति । पुनरागम सिद्धांतपठनादि उल्लासयति प्रबल करोति । पुन पुण्यमेव सत्कर्मवन कदलयति कदलायुक्त करोति । पुन अघ पाप दलयति खडयति । पुन स्वर्गं ददाति । क्रमादनुक्रमेण निर्वाणश्रिय मोक्षलक्ष्मीं आतनोति दत्ते इत्यर्थ । सुपात्रे दत्त धन एतानि वस्तूनि करोति ॥ ७७ ॥

**पात्रने विषे आपेलु एवु पवित्र द्रव्य चारित्रनी वृद्धि करे छे, विनयने वधारे छे, ज्ञानने उन्नत करे छे, शमतारसनु पोषण करे छे, तपने प्रबल करे छे, शास्त्रनो उल्लास करे छे, पुण्यने उत्पन्न करे छे, पापनो विनाश करे छे, स्वर्गने आपे छे अने अनुक्रमे मोक्षरूपी लक्ष्मीने विस्तारे छे (७७)**

**दारिद्र्य न तमीक्षते न भजते दौर्भाग्यमालम्बते,**
**नाऽकीर्तिर्न पराभवोऽभिलषते न व्याधिरास्कंदति ॥**
**दैन्य नाद्रियते दुनोति न दर॰ क्लिश्नाति नैवापदः,**
**पात्रे यो वितरत्यनर्थदलन दान निदान श्रियाम् ॥७८॥**

पुनर्दानगुणानाह ॥ दारिद्र्य नेति ॥ य पुमान् पात्रे सुपात्रे दान वितरति प्रयच्छति । त पुरुष दारिद्र्य न ईक्षते न पश्यति । पुनस्त दौर्भाग्य दुर्भगत्व न भजते न सेवते । पुनस्त अकीर्तिरपयशो नालम्बते नाश्रयति । पुनस्त पराभव नाऽभिलषते न वाञ्छति । पुनर्व्याधिर्गद त

नास्कंदति न शोषयति । पुनर्दैन्यं दीनता नाद्रियते नाश्रयति । पुनर्दरो भयं न दुनोति न पीडयति । पुनः आपदो व्यसनानि कष्टानि तं न क्लिश्नंति न पीडयंति । यः पात्रे दानं ददाति । किंभूतं दानं ? अनर्थानां उपद्रवानां दलनं छेदनं पुनः किंभूतं श्रियां संपदां निदानं कारणं ॥ ७८ ॥

उपद्रवनो नाश करनारू अने संपत्तिनुं कारणभूत एवुं जे दान, तेने जे पुरुष पात्रजनने विषे आपे छे, ते पुरुषनी सामुं दारिद्र्य जोतुं नथी, दौर्भाग्य तेने सेवतुं नथी, अपयश तेनो आश्रय करतो नथी, पराभव तेनी अभिलाषा करतो नथी, व्याधि तेनुं शोषण करतो नथी; दीनता तेनो आदर करती नथी, भय तेने पीडतो नथी, अने आपत्तिओ तेने क्लेश पमाडती नथी.(७८)

लक्ष्मीः कामयते मतिर्मृगयते कीर्तिस्तमालोकते,
प्रीतिश्चुंबति सेवते सुभगता नीरोगताऽऽलिंगति ॥
श्रेयःसंहतिरभ्युपैति वृणुते स्वर्गोपभोगस्थिति-
र्मुक्तिर्वांछति यः प्रयच्छति पुमान् पुण्यार्थमर्थं निजम्॥७९

दानगुणानाह ॥ लक्ष्मीरिति ॥ यः पुमान् पुण्याऽर्थं श्रेयोर्थं निजं अर्थं स्वकीयं धनं प्रयच्छति ददाति । तं पुरुषं लक्ष्मीः कमला कामयते वांछति । पुनर्मतिर्बुद्धिस्तं मृगयते अन्वेषति । पुनः कीर्त्तिस्तं आलोकते पश्यति । पुनः प्रीतिरानंदस्तं चुंबति श्लिष्यति । पुनः सुभगता सौभाग्यं तं सेवते भजति । नीरोगता आरोग्यं तं आलिंगति । पुनः श्रेयःसंहतिः कल्याणपरंपरा तं अभ्युपैति सन्मुखमायाति । पुनः स्वर्गोपभोगस्थितिर्देवलोकस्य भोगपद्धतिस्तं वृणुते वरयति । पुनर्मुक्तिर्मोक्षस्तं वांछति । यः पुण्यार्थं निजं अर्थं प्रयच्छति ॥ ७९ ॥

जे पुरुष पोतानुं द्रव्य पुण्यार्थें आपे छे, ते पुरुषनी, लक्ष्मी इच्छा करे छे; तेने बुद्धि शोधे छे, कीर्ति जुए छे, प्रीति चुंबन

करे छे, सौभाग्य सेवा करे छे, आरोग्यता आलिंगन करे छे, कल्याणनी परपरा तेनी सन्मुख आवे छे, स्वर्गना उपभोगनी पद्धति तेने वरे छे अने मोक्षस्त्री तेनी वाछा करे छे (७९)

(मदाक्रातावृत्तम्)

तस्यासन्ना रतिरनुचरी कीर्त्तिरुत्कठिता श्रीः,
स्निग्धा बुद्धिः परिचयपरा चक्रवर्त्तित्वऋद्धिः ॥
पाणौ प्राप्ता त्रिदिवकमला कामुकी मुक्तिसप-
त्सप्तक्षेत्र्या वपति विपुल वित्तबीज निज यः ॥ ८० ॥

भूयोऽप्याह ॥ य पुमान् निज स्वकीय विपुल प्रचुर वित्तमेव बीज सप्तक्षेत्र्या ( १ जिनभुवन, २ बिंब, ३ पुस्तक, ७ चतुर्विधसघ भक्तिरूपाया ) वपति । तस्य पुरुषस्य रति समाधिरासन्ना समीपवर्त्तिनी स्यात्तथा तस्य कीर्त्तिरनुचरी सेविका स्यात्तथा तस्य श्री सपत् धनधान्यहिरण्यरूपा उत्कठिता मिलनायोत्कठिता स्यात्तथा तस्य बुद्धिरौत्पत्तिक्या या स्निग्धा स्नेहवती स्यात्तथा तस्य चक्रवर्तित्वऋद्धि सार्वभौमविभूति परिचयपरा सुपरिचिता स्यात्तथा त्रिदिवस्य स्वर्गस्य कमला श्री पाणौ हस्ते प्राप्ता सगता स्यात्तथा मुक्तिसपत् सिद्धिरमा कामुकी साभिलाषा स्याद सप्तक्षेत्र्या निज वित्तबीज वपति ॥८०॥ अत्र धनाशालिभद्र चद्नबाला सागरचद्रश्रेष्ठिकथा ॥ सिंदूरप्रकरस्य व्याख्याया हर्षकीर्तिभि ॥ सूरिभिर्विहिताया तु, दानस्य प्रक्रमोऽजनि ॥ १८ ॥ इति दानप्रक्रम १८

जे पुरुष पोताना विशाल द्रव्यरूपी बीजने सात क्षेत्रो विषे वावे छे, ते पुरुषने सुख सपत्ति समीप वर्ते छे, कीर्ति दासी थाय छे, लक्ष्मी (मळवाने) उत्कठित थाय छे, बुद्धि स्नेहवाळी थाय छे, चक्रवर्तीपणानी ऋद्धि परिचयवाळी थाय छे, स्वर्गलक्ष्मी हस्तने विषे प्राप्त थाय छे, अने मुक्ति सपत्ति अभिलाषावाळी थाय छे (८०)

### हवे तपनो उपदेश कहे छे.

( शार्दूलविक्रीडितवृत्तम् )

**यत्पूर्वार्जितकर्मशैलकुलिशं यत्कामदावानल-**
**ज्वालाजालजलं यदुग्रकरणग्रामाहिमंत्राक्षरम् ॥**
**यत्प्रत्यूहतमःसमूहदिवसं यल्लब्धिलक्ष्मीलता-**
**मूलं तद्विविधं यथाविधि तपः कुर्वीत वीतस्पृहः ॥८१॥**

अथ तपस उपदेशद्वारमाह ॥ यदिति ॥ वीता गता स्पृहा वांछा यस्य स वीतस्पृहः सन् वांछा निदानादिरहितः सन् तद्विविधं तपः कुर्व्वीत कुर्यात् । तत्किं ? यत्तपः पूर्वे भवेऽर्जितानि उपार्जितानि यानि कर्माणि तान्येव शैलाः पर्व्वतास्तेषु कुलिशं वज्रं । तेषां छेदकत्वात् । पुनर्यत्तप. काम एव दावानलो दवाग्निस्तस्य ज्वालानां जालः समूहस्तत्र जलं । तद्विनाशकत्वात् । पुनर्यत्तपः उग्रो दारुणो यः करणानां इंद्रियाणां ग्रामः समूहः स एवाहिः सर्प्पस्तस्य मंत्राक्षरं सर्प्पमंत्रस्य बीजं तत्स्वाधीनकर्तृत्वात् । पुनर्यत्तपः प्रत्यूहा एव विघ्ना एव तमसोऽधकारस्य समूहस्तत्र दिवसं दिनं । तन्नाशकत्वात् । पुनर्यत्तपो लब्धिलक्ष्मी लब्धिसंपदेव लता वल्ली तस्याः मूलं उत्पादनकंदं । तद्विविधं नानाप्रकारं यथाविधि तपः कुर्वीत ॥

**पूर्वे उपार्जन करेलां कर्मरूपी पर्वतने ( छेदवाने ) वज्र समान, मनवांछितरूप दावानलनी ज्वालने ( शमाववाने ) जल समान, उग्र एवो जे इंद्रिय समूह ते रूप सर्पने ( वश करवाने ) मंत्राक्षर समान, विघ्नरूप अंधकारना समूहने ( नाश करवाने ) दिवस समान अने लब्धि तथा लक्ष्मीरूपी लताने ( उत्पन्न करवाने ) मूल समान--एवा बे प्रकारना तपने; तमे कांई पण फलनी इच्छा कर्या विना, विधि प्रमाणे आदरो. ( ८१ )**

यस्माद्विघ्नपरंपरा विघटते दास्यं सुराः कुर्वते,
कामः शाम्यति दाम्यतींद्रियगणः कल्याणमुत्सर्प्पति ॥
उन्मीलंति महर्द्धयः कलयति ध्वंसं चयः कर्मणा,
स्वाधीनं त्रिदिवं शिवं च भजति श्लाघ्यं तपस्तन्न किम् ॥

तपःप्रभावमाह ॥ यस्मादिति ॥ तत्तपः किं श्लाघ्यं न प्रशस्यं न? अपि तु श्लाघ्यमेव। तत्किं? यस्मात्तपसो विघ्नपरंपरा कष्टश्रेणिर्विघटते विलयं याति। पुनः सुरा देवा दास्यं दासत्वं कुर्वते। पुनर्यस्मात्कामः शाम्यति उपशमं याति। पुनः इंद्रियगणः पंचेंद्रियसमूहो दाम्यति दमं प्राप्नोति। पुनर्यस्मात्तपसः कल्याणं श्रेय उत्सर्प्पति प्रसरति। पुनर्यस्मान्म-हर्द्धयस्तीर्थंकरादिमपदं उन्मीलंति विकसंति। पुनर्यस्मात् कर्मणां ज्ञाना-वरणीयादीनां चयः समूहो ध्वंसं नाशं कलयति प्रयाति। पुनर्यस्मात्तपसः त्रिदिवं स्वर्गश्च पुनः शिवं मोक्षः स्वाधीनं स्वायत्तं स्यात्तत्तपः किं श्लाघ्यं न स्यात्? ॥ ८२ ॥

जे तपथी कष्ट परंपरा नाश थाय छे, देवताओ दासपणुं करे छे, कामविकार शांत थाय छे, इंद्रियोनो समूह दमाय छे, कल्याण प्रसरे छे, महा ऋद्धिओ विकस्वर थाय छे, ज्ञानावरणादि कर्मसमूह नाश पामे छे, तथा स्वर्ग अने मोक्ष स्वाधीन थाय छे, एवुं जे तप, ते शुं प्रशंसा करवा लायक नथी? ( ८२ )

कांतारं न यथेतरो ज्वलयितुं दक्षो दवाग्निं विना,
दावाग्निं न यथेतरः शमयितुं शक्तो विनांभोधरम् ॥
निष्णातः पवनं विना निरसितुं नान्यो यथांभोधरं,
कर्मौघं तपसा विना किमपरं हर्तुं समर्थस्तथा ॥८३॥

अन्वयः ॥ कांतारमिति ॥ यथा कांतारं वनं ज्वलयितुं दवाग्निं विना इतरोऽन्यो दक्षो न। पुनर्यथा दावाग्निं शमयितुं विध्यापयितुं अंभोधरं

मेघं विनाऽपरः शक्तो न समर्थो न । पुनर्यथांऽभोधरं मेघं निरसितुं दूरीकर्तुं पवनं विनाऽन्यो न निष्णातो न निपुणः । तथैव कर्मौघं कर्मसमूहं हंतुं छेत्तुं तपसा विनाऽन्यत्किं समर्थं? अपितु न किमपि । किंतु तप एव कर्माणि हंतुं समर्थं ८३

जेवी रीते वनने बाळवाने दावाग्नि विना अन्य कोई समर्थ नथी; जेम दावाग्निने शमाववाने मेघ विना अन्य कोई शक्तिमान् नथी; अने जेम मेघने विखेरी नांखवाने वायु विना अन्य कोई निपुण नथी, तेवी रीते कर्मना समूहने हरवामां तप विना अन्य कोई समर्थ नथी. ( ८३ )

हवे तपनो महिमा कहे छे.

( स्रग्धरावृत्तम् )

संतोषस्थूलमूलः प्रशमपरिकरः स्कंधबंधप्रपंचः,
पंचाक्षीरोधशाखः स्फुरदभयदलः शीलसंपत्प्रवालः ॥
श्रद्धांभःपूरसेकाद्विपुलकुलबलैश्वर्यसौंदर्यभोगः,
स्वर्गादिप्राप्तिपुष्पः शिवसुखफलदः स्यात्तपःपादपोऽयम् ॥८४

पुनराह ॥ संतोषेति ॥ अयं तप एव पादपो वृक्षः शिवसुखफलदः स्यात् शिवसुखान्येव फलानि ददातीति मोक्षफलदः स्यात् । किंभूतस्तपःपादपः । संतोषो मूर्च्छात्याग एव स्थूलं पुष्टं मूलं यस्य सः । पुनः किंभूतः? प्रशम एव क्षमा एव परिकरः परिवारो यस्य सः । पुनः किंभूतः स्कंधा आचारांगादिश्रुतस्कंधास्तेषां बंधो रचना एव प्रपंचो विस्तारो यस्य सः । पुनः किंभूतः । पंचानां अक्षाणां इंद्रियाणां समाहारः पंचाक्षी पंचाक्ष्याः रोध एव शाखा यस्य सः । पुनः किंभूतः । स्फुरत् देदीप्यमानं अभयं अभयदानमेव दलत्वं यस्य सः । अथवा स्फुटविनयदलः स्फुटानि प्रकटानि विनयरूपाणि दलानि पत्राणि यस्य सः । पुनः

किंभूत । शीलसंपदेव ब्रह्मव्रतमेव प्रवाला नवपल्लवा यस्य स । पुन किंभूत । श्रद्धारुचि सैवाभ पानीय तस्या पूरस्तेन सेक सिंचन तस्मात् विपुलानि विस्तीर्णानि कुलबलैश्वर्यसौंदर्याण्येव भोगो यस्य स । अथवा विपुलकुलबलैश्वर्यमेव भोगो विस्तारो यस्य स । पुन किंभूत । स्वर्गादीना देवलोकग्रैवेयकानुत्तरविमानाना प्राप्तिरेव पुष्पाणि यस्य स । ईदृशस्तप एव पादपो वृक्ष स शिवसुखमेव फल ददाति ॥ ८४ ॥ अत्र नंदिषेण-वसुदेव हरिकेशीनलकथा ॥ सिंदूरप्रकराख्यस्य, व्याख्याया हर्षकीर्तिभि ॥ सूरिभिर्निर्मिताया तु, तपस प्रक्रमोऽजनि ॥ इति तप प्रक्रम ॥

जे (तपरूपी वृक्ष)ने, संतोषरूपी म्होटु मूल छे, शमतारूपी परिवार छे, श्रुतस्कंधनी रचनारूपी विस्तार छे, पचेंद्रियोना रोधनरूप शाखा छे, देदिप्यमान अभयदानरूप पत्र छे, शीलसंपत्तिरूप पल्लव छे, श्रद्धारूपी जलपूरना सिंचनथी विस्तीर्ण थएला एवा जे कुल बल ऐश्वर्य-सौंदर्य तेरूप भोग छे, अने स्वर्गादिनी प्राप्तिरूप पुष्प छे, तेवु जे तपरूपी वृक्ष ते शिवसुखरूप फलने आपे छे

हवे शुभ भावनो उपदेश कहे छे

(शार्दूलविक्रीडितवृत्तम्)

नीरागे तरुणीकटाक्षितमिव त्यागव्यपेतप्रभौ,
सेवाकष्टमिवोपरोपणमिवांभोजन्मनामश्मनि ॥
विष्वग्वर्षमिवोपरक्षितितले दानार्हदर्चातपः,
स्वाध्यायाध्ययनादि निष्फलमनुष्ठानं विना भावनाम् ॥

भावोपदेशमाह ॥ नीरागे इति ॥ भावना शुभभाव विना दानार्हदर्चातप स्वाध्यायाध्यनादि सर्वं अनुष्ठान क्रियाकरण निष्फल स्यात् । दान च अर्हदर्चा जिनपूजा च तपश्च स्वाध्यायश्च ते आदौ यस्य तत् दानजिनपूजातप सिद्धातपठनादिक भाव विना निष्फल । किमिव । नी-

रागे पुरुषे तरुणीकटाक्षितमिव युवतीकटाक्षविक्षेपणमिव । यथा नीरागे तरुणीकटाक्षा निष्फलाः । पुनः किमिव ? त्यागव्यपेतप्रभौ दानरहिते कृपणे स्वामिनि सेवाकष्टं इव अदातरि स्वामिनि सेवाकष्टं निष्फलं । पुनः किमिव । अश्मनि पाषाणे अंभोजन्मनां कमलानां उपरोपणं वापनं इव यथा पाषाणोपरि कमलवापनं निष्फलं । पुनः किमिव । ऊषरक्षितितले ऊषरभूमौ क्षारभूमौ विष्वग्वर्षमिव यथोषरभूमौ क्षारयुक्तप्रदेशे मेघवर्षणं निष्फलं ॥ तथा शुभभावनां विना सर्वा क्रिया निष्फला ॥ ८५ ॥

जेवी रीते निरागी पुरुषने विषे युवतीनो कटाक्ष निष्फल छे, दानरहित प्रभुने विषे सेवानुं कष्ट निष्फल छे, पाषाणने विषे कमल वाववां ते निष्फल छे, अने खारवाली भूमिने विषे वर्षाद निष्फल छे, तेवी रीते दान-जिनपूजा-तप-स्वाध्यायादि अनुष्ठान पण भावना विना निष्फल छे. (८५.)

सर्वं ज्ञीप्सति पुण्यमीप्सति दयां धित्सत्यघं भित्सति,
क्रोधं दित्सति दानशीलतपसां साफल्यमादित्सति ॥
कल्याणोपचयं चिकीर्षति भवांभोधेस्तटं लिप्सते,
मुक्तिस्त्रीं परिरिप्सते यदि जनस्तद्भावयेद्भावनाम् ॥८६॥

पुनराह ॥ सर्व्वमिति ॥ यदि जनो लोकः सर्व्वं वस्तु ज्ञीप्सति ज्ञातुं इच्छति । पुनर्यदि जनः पुण्यं धर्म्मं ईप्सति वांछति । पुनर्यदि जनो दयां कृपां धित्सति धर्तुमिच्छति । पुनर्यदि अघं पापं भित्सति भेत्तुं इच्छति । पुनर्यदि क्रोधं रोषं दित्सति खंडितुं इच्छति । पुनर्यदि दानशीलतपसां साफल्यं सफलत्वं आदित्सति ग्रहीतुमिच्छति । पुनर्यदि कल्याणोपचयं कुशलं वृद्धिं चिकीर्षति कर्तुमिच्छति । पुनर्यदि भवांभोधेः संसारसमुद्रस्य तटं पारं लिप्सते लब्धुमिच्छति । पुनर्यदि मुक्तिस्त्री सिद्धिरमणीं परिरिप्सते आलिंगितुं इच्छति जनस्तदा भावनां शुभभावं भावयेत् कुर्यादित्यर्थः ॥

जो मनुष्य सर्व वस्तु जाणवाने इच्छतो होय, धर्मने इच्छतो होय, दया धारण करवाने इच्छतो होय, पाप मापवाने इच्छतो होय, क्रोधने खडन करवाने इच्छतो होय, दान-शील तपना साफल्यने ग्रहण करवाने इच्छतो होय, कल्याणनी वृद्धि करवा इच्छतो होय, ससार समुद्रना तटने पामवाने इच्छतो होय अने जो मुक्तिरूपी स्त्रीनु आलिंगन करवाने इच्छतो होय, तो तेणे शुभ भावना भाववी (८६)

(पृथ्वीवृत्तम्)

विवेकवनसारिणीं प्रशमशर्मसजीवनी,
भवार्णवमहातरीं मदनदावमेघावलीम् ॥
चलाक्षमृगवागुरा गुरुकषायशैलाशनिं,
विमुक्तिपथवेसरीं भजत भावना किं परैः ॥ ८७ ॥

पुनर्विशेषमाह । विवेकेति ॥ भो भव्या । भावना शुभपरिणामरूपा भजत सेवध्व । परै अन्ये कष्टानुष्ठाने शुभभावनारहितै किं ? न किंचिदित्यर्थ । कथभूता भावना । विवेक कृत्याकृत्यविचार एव वन तत्र सारिणी कुल्या ता । पुन प्रशमशर्मण उपशमसुखस्य सजीवनीं जीवनकर्त्री । पुन भव एव ससार एव अर्णव समुद्रस्तत्र महातरी महानावा । पुन किंभूता । मदन एव दावो दावाग्निस्तत्र मेघस्यावली श्रेणि । पुन किंभूता । चलानि चचलानि यानि अक्षाणि इन्द्रियाण्येव मृगा हरिणास्तेषु वागुरा मृगजालपाशबधनरूपा । पुन कीदृशीं । गुरुर्गरिष्ठश्चतु कषायरूपएव शैल पर्वतस्तत्र अशनिं वज्र। पुन किंभूता । विमुक्ते सिद्धे पथा-मार्ग वेसरीं अश्वतरी तद्भारवाहका । तस्माच्छुभभावनामेव कुर्वंतु ८७

विवेकरूपी वनने (पुष्ट करवामा) नदी समान, शमता सुखने (सजीवन करवामा) सजीवनी तुल्य, ससार समुद्रने (पार उता-

रवामां) विषे महा नाव समान, कामाग्निने (शांत करवामां) मेघसमान, चलायमान इंद्रियोरूपी मृगने (बांधवामां) पाश समान, महा कषायरूपी पर्वतने (तोडी पाडवामां) वज्र तुल्य, अने मोक्षमार्गने विषे (भार वहन करवामां) खच्चरी समान, एवी जे भावना तेनुं सेवन करो; अन्य अनुष्ठानोथी शुं? (८७)

(शिखरिणीवृत्तम्.)

**घनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं,**
**क्रियाकांडं चंडं रचितमवनौ सुप्तमसकृत् ॥**
**तपस्तीव्रं तप्तं चरणमपि चीर्णं चिरतरं,**
**नचेच्चित्ते भावस्तुषवपनवत्सर्वमफलम् ॥ ८८ ॥**

पुनराह ॥ घनमिति ॥ घनं प्रचुरं वित्तं धनं पात्रेभ्यो दत्तं । पुनरखिलं समस्तं जिनवचनं जिनागमरूपं अभ्यस्तं पठितं । पुनश्चंडं भीमं क्रियाकांडं लोचादि रचितं कृतं । पुनरवनौ भूमौ असकृद्वारंवारं सुप्तं शयनं कृतं । पुनस्तीव्रं दुःकरं तपस्तप्तं तपः कृतं । पुनश्चरणं चारित्रं चिरतरं बहुकालं चीर्णं सेवितं पालितं । परं चेद्यदि चित्ते भावो न, शुभभावना नास्ति । तदा धान्यस्य तुषवपनवत् सर्वं पूर्वोक्तं विफलं स्यात् ॥ ८८ ॥ अत्र मरुदेवीभरतएलाचीपुत्रप्रसन्नचंद्रराजर्षीणां कथाः ॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्त्तिभिः ॥ सूरिभिर्विहितायां तु, भावनाप्रक्रमोऽजनि ॥ २० ॥

**बहु दान आप्यां, समग्र जिनवचननुं अध्ययन कर्युं, भयंकर क्रियाकांड रच्यो, वारंवार भूमि विषे शयन कर्युं, तीव्र तपश्चर्या करी, चिरकाल पर्यंत चारित्र पण पाल्युं, परंतु जो चित्तने विषे शुभभाव नथी, तो ए सर्व फोतरां खांडवानी पेठे निष्फल छे. (८८)**

**हवे वैराग्य कहे छे.**

( हरिणीवृत्तम् )

**यदशुभरजःपाथो दृप्तेंद्रियद्विरदांकुशं,**
**कुशलकुसुमोद्यानं माद्यन्मनःकपिशृंखला ॥**
**विरतिरमणीलीलावेश्म स्मरज्वरभेषजं,**
**शिवपथरथस्तद्वैराग्यं विमृश्य भवाऽभयः ॥ ८९ ॥**

अथ वैराग्यमाह ॥ यदशुभेति । भो मुने! तद्वैराग्यं विमृश्य चिंतयित्वाऽभयः संसाररहितो भव । तत्किं ? यत् वैराग्यं अशुभं पापमेव रजो-धूलिस्तत्र पाथो जलं तदुपशामकत्वात् । पुनर्दृप्तानि इंद्रियाण्येव द्विरदा गजास्तेषां अंकुशमिवांकुशं वश्यकरं । पुनः किंभूतं । कुशलमेव कुसुमानि तेषां उद्यानं पुष्पारामं । पुनर्यत् वैराग्यं माद्यन्मदोन्मत्तो यो मनःकपिर्वानरस्तस्य शृंखला निगडबंधनं । पुनर्यत् विरतिरमणीलीलावेश्म देशविरतिसर्वविरतिरेव स्त्रीः तस्याः क्रीडागृहं । पुनर्यत् स्मरज्वरस्यौषधं कामज्वरौषधं । पुनर्यत् शिवपथरथः मोक्षमार्गे रथसमानं । तद्वैराग्यं विमृश्य विचार्य अभयः संसारभयरहितो भव भवाभवः इति पाठे भवरहितो भव ॥ ८९ ॥

पापरूपी रजने (शमाववा देवामां) जल समान, उन्मत्त इन्द्रियोरूपी हस्तीने (वश करवामां) अंकुश समान, कुशलतारूपी पुष्पने (जन्म आपवामां) उद्यान समान, मदयुक्त चित्तरूपी वानरने बांधवामां सांकल समान, विरतिरूपी रमणीना (खेलवामां) क्रीडागृहतुल्य, कामदवरूपी तापने (नाश करवामां) औषध समान, अने मोक्षमार्गने विषे (चलाववामां) रथ तुल्य, एवो जे वैराग्य, तेने विचारीने संसारना भय रहित थाओ (८९)

( वसंततिलकावृत्तम् )

**चंडानिलस्फुरितमब्दचयं दवार्चि-**
**वृंक्षव्रजं तिमिरमंडलमर्कविंबम् ॥**
**वज्रं महीध्रनिवहं नयते यथांतं,**
**वैराग्यमेकमपि कर्म तथा समग्रम् ॥ ९० ॥**

पुनराह ॥ चंडानिलेति ॥ यथा चंडानिलस्फुरितं प्रचंडवायुस्फूर्जितं अब्दचयं मेघघटां अंतं विनाशं नयते प्रापयति । पुनर्यथा दावार्चिर्दावाग्निर्वृक्षसमूहं अंतं प्रापयति । पुनर्यथा अर्कविंबं सूर्यविंबं तिमिरमंडलं अंधकारसमूहं अंतं नयते । पुनर्यथा वज्रं इंद्रायुधं महीध्रनिवहं पर्वतसमूहं अंतं विनाशं नयते प्रापयति । तथा एकमपि वैराग्यमेव समग्रं कर्म अंतं नयते ॥

**जेवी रीते प्रचंड वायुनुं चालवुं मेघना समूहनो नाश करे छे; दावाग्नि वृक्षोना समूहनो अंत लावे छे; सूर्यविंब अंधकारना समूहने दूर करे छे; अने वज्र पर्वतोना समूहने चूर्ण करे छे; तेवी रीते एक एवो पण वैराग्य समग्र कर्मने नाश करे छे. ( ९० )**

( शिखरिणीवृत्तम् )

**नमस्या देवानां चरणवरिवस्या शुभगुरो-**
**स्तपस्या निःसीमश्रमपदमुपास्या गुणवताम् ॥**
**निषद्याऽरण्ये स्यात् करणदमविद्या च शिवदा,**
**विरागः क्रूरागःक्षपणनिपुणोऽतः स्फुरति चेत् ॥९१॥**

पुनराह ॥ नमस्येति ॥ चेद्यदि अंतश्चित्ते विरागो वैराग्यमेव स्फुरति वर्त्तते तदा देवानां नमस्या नमस्करणं शिवदा मोक्षदायिनी मोक्षदायिका स्यात् । पुनः शुभगुरोश्चरणवरिवस्या चरणयोः सेवा तदा शिवदा स्यात् । पुनर्निःसीमश्रमपदमत्यंतश्रमपदं ईदृशी तपस्या तपस्तदैव शिवदा स्यात् ।

पुन गुणवता ज्ञानादिगुणयुक्ताना उपास्या सेवापि तदैव शिवदा स्यात् । पुनररण्ये वने निषद्या स्थितिस्तदैव शिवदा स्यात् । पुन करणदमविद्या इद्रियदमनविधिरपि तदैव शिवद स्यात् । यदि अतर्मध्ये वैराग्य भवति । कथभूतो विराग । क्रूराग क्षपणनिपुण क्रूर घोर आगोऽपराधस्तस्य क्षपणे क्षपणकरणे निपुणश्चतुर ॥ ९१ ॥

क्रूर एवा अपराधने दूर करवामा निपुण एवो जे वैराग्य, ते जो हृदयने विषे खीलतो होय तोज, देवने करेलो नमस्कार, उत्तम गुरूनी चरणसेवा, अत्यत श्रमनु स्थानक एवी तपश्चर्या, गुणवान् जनोनी सेवा, अटवीने विषे वास, अने इद्रियोने दमवानी विद्या एटलावाना मोक्षदायी थाय छे (९१)

हवे विरक्तना गुणो कहे छे

( शार्दूलविक्रीडितवृत्तम् )

**भोगान् कृष्णभुजगभोगविषमान् राज्य रजःसन्निभ,**
**बधून्बधनिवधनानि विषयग्रामं विषान्नोपमम् ॥**
**भूर्ति भूतिसहोदरां तृणमिव स्त्रैण विदित्वा त्यजन्,**
**तेष्वासक्तिमनाविलो विलभते मुक्तिं विरक्तः पुमान् ९२**

विरक्तगुणानाह ॥ भोगानिति ॥ विरक्तो वैराग्ययुक्त पुमान् मुक्ति विलभते सिद्धि प्राप्नोति । किं कृत्वा? भोगान् शब्दादीन् कृष्णश्चासौ भुजग सर्पस्तस्य भोग शरीर तद्वत् विषमान् भीमान् विदित्वा ज्ञात्वा तेषु आसक्तिं अत्यभिलाष त्यजन् । पुन राज्य आधिपत्य रज सन्निभ धूलिसदृश मत्वा त्यजन् । पुनर्बधून् स्वजनान् कर्मबधस्य निबधनानि कारणानि मत्वा । पुनर्विषयग्राम विषयसमूह विषान्नोपम विषमिश्रितान्नसम मत्वा । पुनर्भूतिं ऋद्धि भूतिसहोदरा भस्मभगिनीं रक्षासदृशीं मत्वा । पुन स्त्रैण स्त्रीणा समूह तृणमिव तृणसदृश विदित्वा तेषु आसक्तिं अत्यऽभि

लापं त्यजन् । कथंभूतो विरक्तःपुमान् । अनाविलः रागद्वेषाद्यनाकुलः ॥ ॥ ९२ ॥ सिंदूरप्रकराख्यस्य, व्याख्यायां हर्षकीर्त्तिभिः ॥ सूरिभिर्विहितायां तु, वैराग्यप्रकमोऽजनि ॥ २१ ॥

भोगोने कृष्ण सर्पना देहनी पेठे विषम जाणीने, राज्यने रज समान गणीने; बंधुओने बंधनना कारणरूप समजीने, विषयना समूहने विषयुक्त अन्न समान लेखीने, ऋद्धिने भस्म तुल्य जाणीने, अने स्त्रीसमूहने तृणनी पेठे अवगणीने, ते सर्वने विषे आसक्ति त्यजी दई, निर्मल अंतःकरणवालो विरक्त पुरुष मोक्ष संपादन करे छे. (९२)

हवे सामान्य उपदेश कहे छे.

( उपजातिवृत्तम् )

जिनेंद्रपूजा गुरुपर्युपास्तिः, सत्त्वानुकंपा शुभपात्रदानम् ॥
गुणानुरागः श्रुतिरागमस्य, नृजन्मवृक्षस्य फलान्यमूनि ॥९३ ॥

अथ सामान्योपदेशमाह ॥ जिनेंद्रेति ॥ नृजन्मवृक्षस्य मनुष्यजन्मतरोरमूनि फलानि । एतैः कृत्वा मनुष्यजन्म सफलं भवति । अमूनि कानि? प्रथमं तावज्जिनेंद्रपूजा श्रीवीतरागदेवस्य पूजा कार्या । पुनर्गुरूणां पर्युपास्तिः सेवा । पुनः सत्त्वानां जीवानां अनुकंपा दया कार्या । पुनः शुभपात्रे दानं । पुनर्गुणेषु अनुरागः गुणग्रहणं कार्यं । पुनरागमस्य सिद्धांतस्य श्रुतिः श्रवणं कार्यं । एभिः कृत्वा मनुष्यजन्म सफलं स्यात् ॥९३ ॥

जिनेश्वरनी पूजा, गुरुनी सेवा; प्राणी उपर दया, सुपात्रदान, गुणी उपर प्रीति, अने शास्त्रश्रवण, ए छ वानां मनुष्यजन्मरूप वृक्षनां फल छे. (९३)

( शिखरिणीवृत्तम् )

त्रिसंध्यं देवार्चां विरचय चयं प्रापय यशः,
श्रियः पात्रे वापं जनय नयमार्गं नय मनः ॥
स्मरक्रोधाद्यारीन् दलय कलय प्राणिषु दयां,
जिनोक्तं सिद्धांतं शृणु वृणु जवान्मुक्तिकमलाम् ९४

त्रिसंध्यमिति ॥ त्रिसंध्यं त्रिकालं प्रभाते मध्याह्ने सायं च देवार्चां श्रीवीतरागपूजां विरचय कुरु । पुनर्यशः कीर्तिं चयं वृद्धिं प्रापय । श्रियो लक्ष्म्याः पात्रे सुपात्रे वापं जनय वपनं कुरु । पुनर्मनश्चित्तं नयमार्गं न्यायमार्गं प्रति नय । पुनः स्मरक्रोधाद्यारीन् कामक्रोधमानमायालोभाद्यान् शत्रून् दलय खंडय । पुनः प्राणिषु जीवेषु दयां कलय कुरु । पुनर्जिनोक्तं अर्हत्प्रणीतं सिद्धांतं सूत्रं शृणु । एतानि कृत्वा जवात् वेगात् मुक्तिकमलां शिवश्रियं वृणु वरय ॥ ९४ ॥

त्रणे संध्या समये जिनपूजा करो, कीर्ति वधारो, लक्ष्मीने सुपात्रने विषे वावो, मनने न्यायमार्गे दोरो, क्रोध, काम आदि शत्रुओनो नाश करो, प्राणीमात्रने विषे दया करो, अने जिनेश्वर प्रणीत सिद्धांतोनुं श्रवण करो; अने ( ए सर्वथाना करीने ) शीघ्र मोक्ष स्त्रीने वरो

( शार्दूलविक्रीडितवृत्तम् )

कृत्वाऽर्हत्पदपूजनं यतिजनं नत्वा विदित्वाऽऽगमं,
हित्वा संगमधर्मकर्मठधियां पात्रेषु दत्वा धनम् ॥
गत्वा पद्धतिमुत्तमक्रमजुषां जित्वाऽन्तरारिव्रजं,
स्मृत्वा पंचनमस्क्रियां कुरु करक्रोडस्थमिष्टं सुखम् ॥९५॥

कृत्वाऽर्हदिति ॥ भो श्राद्ध! एतानि कृत्वा इष्टं वांछितसुखं करक्रोडस्थं हस्तोत्संगगतं कुरु करोत्संगप्राप्यं कुरु । किं कृत्वा ? अर्ह-

त्पदपूजनं वीतरागचरणपूजां कृत्वा । पुनर्यतिजनं साधुजनं नत्वा । पुनरागमं सिद्धांतं विदित्वा ज्ञात्वा श्रुत्वा । पुनः अधर्मकर्मठधियां पापासक्तबुद्धीनां संगं संसर्गं हित्वा त्यक्त्वा परित्यज्य । पुनः पात्रेषु निजं धनं वित्तं दत्वा । पुनः उत्तमक्रमजुषां उत्तममार्गसेविनां पद्धतिं मार्गं प्रति गत्वा अनुश्रित्य । पुनरंतरारिव्रजं अंतरंगारिषड्वर्गं आभ्यंतरं वैरिसमूहं जित्वा । पुनः पंच नमस्क्रियां नमस्कारमंत्रं स्मृत्वा ध्यात्वा इष्टं सुखं करोत्संगप्राप्यं कुरु ॥

अर्हत् भगवानना चरणनी पूजा करीने, यतिजनोने नमस्कार करीने, शास्त्रज्ञान संपादन करीने, पापने विषे आसक्त बुद्धिवाला मनुष्योनो संग त्यजीने, सुपात्रे दान दईने, उत्तम मार्गे चालनार जनोनी रीतिए चालीने, छ अभ्यंतर शत्रुओने जीतीने अने पंचपरमेष्ठी नमस्कारने स्मरण करीने, वांछित सुखने संपादन करो.

(हरिणीवृत्तम्)

**प्रसरति यथा कीर्तिर्दिक्षु क्षपाकरसोदरा-**
**ऽभ्युदयजननी याति स्फातिं यथा गुणसंततिः ॥**
**कलयति यथा वृद्धिं धर्मः कुकर्महतिक्षमः,**
**कुशलसुलभे न्याये कार्यं तथा पथि वर्तनम् ॥९६॥**

प्रसरतीति ॥ न्याय्ये न्यायोपपन्ने पथि मार्गे तथा प्रवर्तनं कार्यं तथा प्रवृत्तिः कार्या । यथा दिक्षु चतुर्षु दिक्षु क्षपाकरसोदरा चंद्रकिरणवदुज्ज्वला कीर्तिः स्फुरति विस्तरति । पुनर्यथा अभ्युदयजननी उदयकारका गुणसंततिर्गुणश्रेणिः स्फातिं याति विस्तारं व्रजति । पुनर्यथा कुकर्महतौ पापहनने क्षमः समर्थो धर्मो वृद्धिं कलयति वृद्धिं प्राप्नोति । तथा न्याये पथि न्यायमार्गे प्रवर्तनं कार्यं । कथंभूते न्याये पथि । कुशलैश्चतुरपुरुषैः सुलभः सुप्रापः सुखेन लभ्यस्तस्मिन् ॥ ९६ ॥

जेवी रीते चंद्र समान उज्वल कीर्ति दिशाओने विषे प्रसरे, अभ्युदय करनारो गुण समूह विस्तार पामे अने कुकर्मने हणवाने समर्थ एवो धर्म वृद्धि पामे, तेवी रीते, चतुर पुरुषोने सुलभ एवा न्यायमार्गने विषे वर्तन करवु (९६)

( शिखरिणीवृत्तम् )

**करे श्लाघ्यस्त्यागः शिरसिगुरुपादप्रणमनं,**
**मुखे सत्या वाणी श्रुतमधिगतं च श्रवणयोः ॥**
**हृदि स्वच्छा वृत्तिर्विजयि भुजयो' पौरुपमहो,**
**विनाप्यैश्वर्येण प्रकृतिमहता मडनमिदम् ॥ ९७ ॥**

करइति ॥ अहो आश्चर्ये प्रकृतिमहता स्वभावेनोत्तमाना पुसा ऐश्वर्येण साम्राज्येन विनाऽपि इद मडन अस्ति । इदमिति किं ? करे हस्ते त्यागो दान श्लाघ्य मडन न कंकणादि । पुन शिरसि गुरूणा पादयोश्चरणायो प्रणमन नमस्कारकरण मडन न मुकुटतिलकादीनि । मुखे सत्या वाण्येव मडन न ताबूलादि । श्रवणयो कर्णयो अधिगत पठित श्रुत शास्त्रमेव मडन न कुडलादि । हृदि हृदये स्वच्छा निर्मला वृत्तिर्व्यापारएव मडन न हारमालादि । भुजयोर्बाह्वोर्विजयि जयनशील पौरुप पराक्रमो धर्मविपये यद्भवे तदेव मडन न केयूरादि । महता पुसा धन विनापि दयैव मडन ॥

हाथने विषे प्रशस्य एवु जे दान, शीरने विषे गुरूना चरणने प्रणाम, मुखने विषे सत्य वाणी, कानने विषे संपादन करेलु श्रुतज्ञान, हृदयने विषे निर्मल वृत्ति अने भुजाने विषे विजयवान पौरुष (पुरुषार्थ), आ सर्व, ऐश्वर्य विनाना एवा छता पण स्वभावे करीने उत्तम एवा जनोना भूषण छे (९७)

**भवारण्य मुक्त्वा यदि जिगमिषुर्मुक्तिनगरीं,**
**तदानीं मा कार्षीर्विषयविषवृक्षेषु वसतिम् ॥**

**यतच्छायाप्येषां प्रथयति महामोहमचिरा-**
**दयं जंतुर्यस्मात्पदमपि न गंतुं प्रभवति ॥ ९८ ॥**

भवारण्यमिति ॥ भो श्राद्ध! भवारण्यं संसाररूपां अटवीं मुक्त्वा त्यक्त्वा यदि मुक्तिनगरीं सिद्धिपुरीं प्रति जिगमिषसि गंतुकामोऽसि तदानीं विषया एव विषवृक्षास्तेषां वसतिं निवासं मा कार्षीः मा कृथाः। कुतः? यतो यस्मात् कारणात् एषां विषयविषवृक्षाणां छायाऽपि महामोहं महदज्ञानं प्रथयति विस्तारयति। अन्येषामपि विषवृक्षाणां छाया महामोहं महतीं मूर्च्छां जनयति। यस्मान्महामोहादयं जंतुः प्राणी अचिराद्वेगात् पदमपि गंतुं एकं पादमपि चलितुं न शक्नोति। किंतु? स्थावरत्वं प्राप्नोति ॥ ॥ ९८ ॥ सिंदूरप्रकरग्रंथव्याख्यायां हर्षकीर्त्तिभिः ॥ सूरिभिर्विहितायां तु, सामान्यप्रक्रमोऽजनि ॥ २२ ॥

**जो संसाररूपी अटवीने त्यजीने मुक्तिरूपी नगरीए जवानी इच्छा होय, तो विषयरूपी विषवृक्षोने विषे वास करो नहीं; कारण के, ए वृक्षोनी छाया पण एवा महा मोहांधकारने विस्तारे छे के, तेमांथी प्राणी एक पगलुं मात्र पण चालवाने समर्थ थतो नथी.(९८)**

( उपजातिवृत्तम् )

**सोमप्रभाचार्यमभाचयन्न, पुंसां तमःपंकमपाकरोति ॥**
**तदप्यमुष्मिन्नुपदेशलेशे, निशम्यमानेऽनिशमेति नाशम् ९९**

अथ समर्थयति ॥ सोमप्रभेति ॥ सोमप्रभा चंद्रकांतिश्च पुनः अर्यमभा सूर्यप्रभाऽपि पुंसां यत्तमः पंकं अंधकारकर्दमं न अपाकरोति न दूरीकरोति। तदपि तादृशमपि तमःपंकं अज्ञानपापं अमुष्मिन् सिंदूर प्रकराख्ये उपदेशलेशे निशम्यमाने श्रूयमाणे सति अनिशं निरंतरं नाशं एति क्षयं याति। एतत् श्रवणात्तत्तमः पापं च याति। अत्र सोमप्रभाचार्य इति ग्रंथकृता स्वनामापि सूचितम् ॥ ९९ ॥

माणसोना जे अंधकाररूपी कचराने, चंद्रनी कांति के सूर्यनी कांति नाश करी शकती नथी, पण ते अंधकाररूपी कचरो (अज्ञान अने पाप), आ अल्प उपदेश निरंतर श्रवण करवाथी नाश पामे छे (९९)

हवे ग्रंथनी प्रशस्ति करे छे

(मालिनीवृत्तम्)

अभजदजितदेवाचार्यपट्टोदयाद्रि-
द्युमणिविजयसिंहाचार्यपादारविंदे ॥
मधुकरसमतां यस्तेन सोमप्रभेण,
व्यरचि मुनिपराज्ञा सूक्तमुक्तावलीयम् ॥ १०० ॥

अथ प्रशस्तिमाह ॥ अभजदजितदेवेति ॥ तेन सोमप्रभेण मुनिपराज्ञा मुनिपा मुनिश्रेष्ठास्तेषां राजा सूरीश्वरस्तेन मुनिपराज्ञा सूरीश्वरेण इयं सूक्तमुक्तावलि सूक्तान्येव सुभूषितान्येव शोभनप्रस्तावकाव्यान्येव मुक्ता मौक्तिकानि मुक्ताफलानि तेषामावलि श्रेणि व्यरचि विरचिता । तेन केन ? यः सोमप्रभ अजितदेवनामाचार्यस्य पट्टएव उदयाद्रिरुदयाचल तत्र द्युमणि सूर्यसमानोविजयसिंहाचार्यस्तस्य पादारविंदे चरणकमले मधुकरसमतां भ्रमरतुल्यतां अभजत् प्राप । अर्थात् पूर्वमजितदेवाचार्यस्तत्पट्टे विजयसिंहाचार्यस्तत्पट्टे सोमप्रभाचार्यस्तेनेयं सिंदूरप्रकरनामा सूक्तमुक्तावली व्यरचि कृता ॥ १०० ॥ इति प्रशस्ति ॥

इति श्रीसिंदूरप्रकराख्यग्रंथस्य हर्षकीर्तिसूरिविरचिता व्याख्या समाप्ता

अजितदेव नामना आचार्यना पट्टरूप उदयाचलने विषे सूर्य समान एवा जे विजयसिंह आचार्य; तेमना चरणकमलने विषे भ्रमरतुल्य एवा सोमप्रभनामे मुनिराजे आ सुभाषित काव्यरूपी मुक्ताफलनी पंक्ति (सूक्तमुक्तावली) रची छे (१००)

**इति श्रीसिंदूरप्रकरग्रंथ मूल, टीका अने भाषांतर सहित समाप्तम् ॥**